




**महाकाव्यविषयः**

**महाकविः डॉ. श्री. भा. वर्णेकर**

# ॥ श्रीशिवराज्योदयमहाकाव्यम् ॥

डॉ. श्री. भा. वर्णेकरैः विरचितस्य 'श्रीशिवराज्योदय'-महाकाव्यस्य प्रकाशनं 'शारदा'कारैः सर्वात्मना स्वीकृतम् इति सर्वे जानन्त्येव । शारदाङ्कपर्यायत्वेन शारदोपासकेभ्यः सर्गशः महाकाव्यांशसमर्पणेन 'श्रीमच्छत्रपतिशिवरायसंकीर्तने सर्वे दत्तचित्ताः भवन्तु' एतदर्थं सश्रद्धं प्रयतनशीलाः 'शारदा'-काराः । माध्यमिक-प्रशालाः, महाविद्यालयाः, विश्वविद्यालयाः, संस्कृत-महाविद्यालयाः च स्वीये पाठ्यक्रमे आधुनिकम् अपि सर्वोत्कृष्टम् इदं महाकाव्यं स्वीकुर्वन्तु इति 'शारदा'-कारैः भृशं प्रयत्यते । तत्र शास्त्रिपण्डितानां, प्राध्यापकानां, प्राचार्याणां शिक्षाविदां च सहकार्यं साग्रहं प्रार्थयामहे । अस्य महाकाव्यस्य प्रकटपठनं सर्वत्र सभासु, संस्थासु, विद्यामन्दिरेषु संयोजितं भवतु । स्वयं डॉ. श्री. भा. वर्णेकराः, शारदाकाराः वा सानन्दं सिद्धाः सन्ति यथासमयं तदर्थं संचारार्थम् । अस्य महाकाव्यप्रकाशनकार्यस्य प्रचुरव्ययमात्रसाध्यत्वात् सर्वे शिवरायोपासकाः स्वीयं यावदधिकं साहाय्यं 'शारदा'-कार्यालयं प्रति प्रेषयन्तु । 'शारदामुद्रणसिद्धिमन्दिरे' स्वीये तदर्थं स्वतन्त्रः विभागः प्रारब्धः 'शारदा'कारैः सत्वरं मुद्रणादिसौकर्यार्थम् । महाकाव्यस्य श्रीशिवराज्योदयस्य प्रसारं सर्वत्र दिक्षु सत्वरम् अनुभवितुकामैः 'शारदा'कारैः प्रार्थ्यन्ते सर्वे संस्कृतोपासकाः स्वाभिमतमार्गेण साहाय्यं समर्पयितुं पत्रेण च स्वमनोगतं ज्ञापयितुम् । — **संपादकः ।**

**शारदा**

२२ एप्रिल—६ मे १९६६

सौर १-१६ वैशाख १८८८

सत्यकथा

## संस्कृतमहाविद्यालये स्वातन्त्र्यवीरपूजकाः दण्डिताः !

१९५१ खिस्ताब्दे, स्वतन्त्रे भारते, पुण्यपुरे, पुण्यशीलेन केनचन संस्कृतमहाविद्यालय-संचालकेन ' स्वसंस्थास्थितैः संस्कृताभ्यासकैः छात्रैः पुण्यपत्तनस्थानकं गत्वा स्वातन्त्र्यवीराः सावरकर तात्यारायाः पुष्पहार-समर्पणेन पूजिताः ' इत्येतस्य राष्ट्रद्रोहिकृत्यस्य शासनार्थम् आदिष्टः सक्रोधं दण्डः प्रत्येकं ४० रूप्यकात्मकः। बालाः सर्वे छात्राः भीग्रस्ताः दण्डसमर्पणेन स्वात्मानं विस्मरिष्यन्ति इति स्वप्नचित्रं तस्य स्वातन्त्र्यवीर-द्वेषग्रस्तस्य क्रान्तिनिष्ठा-शून्यस्य प्राचार्यस्य सपदि विपाटितं सर्वैः छात्रैः ऐकमत्येन।

गते एव मासि संपन्नायाम् स्वसंस्थानियामकसभायां स्वातन्त्र्यवीर-स्वात्मार्पण-विषयकं शोकप्रस्तावं पारयितुम् अपि अग्रतःसरं प्राचार्यवरम् एनं साक्षात्कृत्य छात्रैः सादरं साभिवादनं च प्रोक्तम् –

**का ला य त स्मै न मः।**

— अधिज्यधन्वा

## श्रीशिवराज्योदये महाकाव्ये
## "राजधानीप्रवासः" नाम सप्तमः सर्गः ।

ऋद्धां विशालामथ राजधानीं संद्रष्टुकामो जगतीप्रसिद्धाम् ।
शिवः प्रतस्थे जनकेन सार्धं जयो नयेनेव महोदयेन ॥१॥
पृष्ठाधिरूढं सहसावगत्य निजप्रभुं बालशिवं सुखेन ।
आनन्दतुङ्गोर्मिविलोलिताङ्गं तुरङ्गरत्नं चपलं ननर्त ॥२॥
लताः प्रसूनैर्मधुबिन्दुगर्भैस्तथा प्रसूनान्यलिगुञ्जनैश्च ।
सभाजयामासुरिवैनमारात् सुलक्षितोर्जस्वलराजचिह्नम् ॥३॥
माद्यन्मयूरा विततोर्ध्वबर्हाः कुमारमालोक्य कुमारकल्पम् ।
अकालकेकाभिरिवोचुरुच्चैः सुस्वागतं प्रोन्नतकण्ठनालम् ॥४॥
शिलोच्चयान्तर्गतगह्वरान्तर्निषेदुषो व्याघ्रकिशोरकास्ते ।
उच्चैर्नरव्याघ्रकिशोरकस्य जगर्जुरेतस्य जयैकघोषम् ॥५॥
पतत्प्रपाताच्छतुषारशीताः शिलाजतुस्पर्शसुगन्धशीलाः ।
सिषेविरे ते मरुतः शिवं तं शिवं तुषाराद्रिभवा यथैव ॥६॥
उत्स्फूर्तवात्सल्यरसेव माता सह्याद्रिलक्ष्मीर्वनगोचराऽसौ ।
बालस्य तीव्रातपवारणाय च्छत्रं तरुच्छायमयं दधार ॥७॥
अभ्रङ्कषोत्तुङ्गसहस्रशीर्षा नीलोदकुण्डस्फुटलक्षनेत्रः ।
उपत्यकादीर्घभुजार्गलोऽसौ दृष्टोऽद्भुतः सह्यगिरिः शिवेन ॥८॥
कुलप्रदीपं कुलपर्वतस्तं समाजुहावेव समानशीलम् ।
चलत्पलाशाङ्गुलिभिस्तरूणां तथा खगानां कलकूजनैश्च ॥९॥
समुच्छलन्तीर्गिरिसम्भवास्ता मुक्ताच्छतोयाः सरितोऽवलोक्य ।
अपां हि तृप्तोऽपि तृषार्तमानी पपौ प्रसन्नः सलिलं कराभ्याम् ॥१०
तद्दर्शनोत्कण्ठितमानसानां वनेचरीणां च नगेचरीणाम् ।
अव्याजसद्भावमनोहराणि ग्रामीणगीतानि पपौ श्रुतिभ्याम् ॥११
सह्याद्रिपाषाणकठोरकायान् सह्यात्मजान् सह्यसमानवर्णान् ।
वृद्धान् वयस्यान् पथि पुंजितांस्तान् पपौ निमेषालसलोचनाभ्याम् ॥
असह्यदास्येन चिरं ज्वलन्तः सह्याद्रिबाला हृदयस्थदाहम् ।
अदर्शयंस्तं स्फुटगूढरोषैरारक्तवर्णैर्नयनस्फुलिङ्गैः ॥१३॥
कांश्चित् क्षणं मस्तकचालनेन कांश्चित् प्रसन्नेक्षणवीक्षणेन ।
स्मितेन वाचा नमनेन कांश्चित् सम्भावयामास वनेचरांस्तान् ॥१४
स्वमण्डलान्तःस्थितकान्तकान्तिश्चन्द्रेण नूनं वदनेऽस्य कीर्णा ।
तस्मिन् कलङ्कोऽत्र तु चन्द्रकान्तिः तस्मादिति प्राहुरशेषनार्यः ॥१५

नीलाम्बुजानां च विशेषशोभा नेत्रद्वयेऽस्य ध्रुवमेव लग्ना ।
तन्न्यूनताव्याकुलिता इवातो गवेषयन्तो भ्रमरा भ्रमन्ति ॥१६॥
आरक्तरुच्या कमलश्रियापि कृत्वाऽस्य पाणिग्रहणं प्रियस्य ।
स्फुटीकृता श्रीहरिमात्रलभ्या सम्भाविनी श्रीपतिता शिवस्य॥१७॥
अस्योन्नतस्कन्धभुजो भुजौ तावाजानुलम्बौ धृतरश्मिपाशौ ।
दुर्दास्यपाशानिव मातृभूमेश्छेत्तुं मुहुः प्रस्फुरतः समर्थौ ॥ १८॥
स भाति कोशः कटिपट्टलग्नो निगूढभास्वत्करवालतेजाः ।
इमं भवान्या भजतीव वीरं म्लेच्छासुरासृक्परिपानकामः ॥१९॥
समाहृतं पत्रपुटे लघिष्ठे गोपाङ्गनाभिः पथि वत्सलाभिः ।
हैयङ्गवीनं मधुबिन्दुपृक्तं मुदा समादाय शिवो लिलेह ॥२०॥
सद्भावपूर्णाकुललोचनानां कृषीवलानां गलिताङ्गभाजाम् ।
प्रसारिताञ्जल्युपसंधृतानि प्रेम्णाऽग्रहीत् वन्यफलानि बालः ॥२१
जरद्गवैः संपरिमर्दितानां प्रत्यग्रनीवारहरित्कणानाम् ।
भूयः समास्वाद्य रसं प्रशंसन्नध्वखेदः प्रययौ जवेन ॥२२॥
तस्मै पिता प्राह शुचिस्मिताय हसन्मुखः संभृतकौतुकाय ।
"जानासि किं राजसभागतेन यथा त्वया राजनि वर्तितव्यम्॥२३॥
विजापुराधीशसभागतेन शूरेण धीरेण च पण्डितेन ।
प्रविष्टमात्रेण नतेन मूर्ध्ना सिंहासनं केवलमीक्षणीयम् ॥२४॥
पृष्ठे समारोप्य च वामपाणिं संस्पर्शता भूमिमथो ललाटम् ।
पुनः पुनर्दक्षिणपाणिना च प्रणम्य सिंहासनमर्चनीयम् ॥२५॥
कटाक्षपातेन पदाधिकारी यदादिशेदासनपीठमारात् ।
तत्रैव तूष्णीं नतमस्तकेन गत्वाऽसनीयं नृपदर्शनार्थम् ॥२६॥
सुवर्णसिंहासनसन्निविष्टो यः कोऽपि राजा स हि विष्णुरेव ।
स दर्शनीयः स च माननीयः प्रशंसनीयः स च सेवनीयः ॥ २७॥
अवाच्यवाचोऽपि ऋचस्तदीया यत्तद्दुरुक्तं खलु तच्च सूक्तम् ।
य उच्यते भूमिचरो हि देवो विपर्यये स्यान्न कथं स वेदः ॥२८॥
कृतप्रवेशे च धराधिनाथे तारस्वरं बन्दिजनः स गर्जेत् ।
सा गर्जना जीव जयेति सर्वैः प्रमुक्तकण्ठं परिबृंहणीया ॥२९॥
आ जन्मनस्त्वं चपलस्वभावो जिज्ञासुरन्यायनिराकरिष्णुः ।
जानीहि राजेन्द्रसभास्थितेन स्वतन्त्रवृत्तिर्न हि दर्शनीया ॥३०॥
समाह्वयेच्चेत् प्रियदर्शनं त्वां राजा स मत्सन्निधिसन्निविष्टम् ।
नतेन मूर्ध्ना व्रज तत्समीपं कुरु प्रणामं जयघोषपूर्वम्" ॥३१॥
शृण्वन् पितुस्तं स हितोपदेशं गम्भीरचेता इव बाल आसीत् ।
संकल्पयन् राजसभाप्रवेशं निसर्गशोभां परितो न वेद ॥३२॥

अथोपविष्टेषु पदाधिकृत्सु ह्यालोकशब्देषु निनादितेषु ।
पतिः स दुर्लालितराज्यलक्ष्म्या म्लेच्छाधिराजः सद आससाद ॥३३
तदा तदालोकनतत्पराणाम् अत्युत्सुकानामपि भक्तिभाजाम् ।
निरन्तराभ्यासवशादधस्तान् नतान्यकस्मादिव मस्तकानि ॥३४॥
सहस्ररत्नावलिपूरितस्य सभावितानस्य विचित्रशोभा ।
नतोत्तमाङ्गस्थशिरस्त्ररत्नप्रभाभिरालेखि धरातलेऽपि ॥३५॥
निसर्गसंस्तम्भितमस्तकेन स्फुटाभिमानेन शिवाजिनाऽसौ ।
विलोकिता राजकृपाकटाक्षसमुत्सुकानां महतां श्ववृत्तिः ॥३६॥
नतेषु सर्वेष्वपि मस्तकेषु कस्यापि बालस्य नवागतस्य ।
नैवानतं मस्तकमेककस्य तदीक्षितं भूपतिनैकलेन ॥३७॥
निवर्णयन् रूपममुष्य कान्तं तेजोविशेषप्रतिभासमानम् ।
राजा सहासं सहसा तमाह 'कुमार! कस्यासि किमागतोऽसि॥३८॥
नरेन्द्रजिज्ञासितपात्रभूतः कोऽयं कुमारः खलु भाग्यशाली ।
इतीव कौतूहलभाग्जनानां नेत्रारविन्दैर्ध्रुवमर्चितोऽसौ ॥३९॥
स मन्द्रगम्भीरतरस्वरेण सम्पूरयन् राजसभां विशालाम् ।
अनम्रशीर्षो नृपमाह बालः "शिवाजिरेषोऽस्मि शहाजिसूनुः॥४०॥
तन्नूतनं नाम शिशोरमुष्य ह्याम्रेडितैरुच्चरितं नृपेण ।
सभ्यैश्च सर्वैरपि तद्वदेव परस्परं नाम निवेदितं तत् ॥ ४१ ॥
सर्वाननेभ्यः समुदीर्यमाणं प्रतिध्वनत् तुङ्गसभालयान्तः ।
स्तम्भेषु भित्तिष्वतिचित्रितासु तन्नाम गम्भीरगुरुत्वमाप ॥४२॥
अनम्रमूर्ध्नो नवबालकस्य निर्भीकतां काञ्चिददृष्टपूर्वाम्
दृष्ट्वैव राजा विमना बभूव समर्थयंस्तं प्रथमापमानम् ॥४३॥
स नित्यनैमित्तिककार्यजातं सभागतं वीक्ष्य कुमारकोऽपि ।
पित्रा प्रतस्थे बहिरञ्जसैव सञ्चिन्तयन् किञ्चिदचिन्तनीयम् ॥
परस्परं किञ्चिदभाषमाणौ पथा प्रयान्तौ जनकात्मजौ तौ ।
चतुष्पथोत्थं सहसा प्रभूतं कोलाहलं शुश्रुवतुर्जनानाम् ॥४५॥
हा हन्यते गौरिति दीनवाक्यं जनैः सहस्रैरुदितं शिवस्य ।
प्रतप्तवज्राहतितीव्रपातं बिभेद चिच्छेद ददाह चित्तम् ॥४६॥
ततः क्षणाद्रम्भणमार्तधेनोरभ्याह्वयन्नूनमनाथनाथम् ।
अश्वाधिरूढं दलितान्तरङ्गं प्रत्याचकर्षेव शिवाजिमारात् ॥४७॥
आकर्णसंकृष्टविशालचापविनिःसृतो भल्ल इव प्रधावन् ।
निमेषमात्राज्जनसागरान्तः प्रविष्टमात्मानमसौ न वेद ॥४८॥
विलिह्यमाना नवशावकेन गृष्टिः स्नुतक्षीरसुधा व्यलोकि ।
आकृष्यमाणा नरराक्षसेन गोपूजकानामपि पश्यतां च ॥४९॥

स्वभावशूरस्य शिशोरमुष्य
वामेतरः पाणिरतीववेगात् ।
निस्त्रिंशमाक्रष्टुमुदग्रधारं
झटित्यसर्पत् कटिदेशमेव ॥५०॥
गोघ्नस्य तस्यैव करः सशस्त्रः
स्वस्यात्तशस्त्रेण कदा करेण ।
निःपातितो भूमितले तदेतद्
रोषाभिभूतो न विवेद बालः ॥५१॥
आलोक्य गोत्राणमदृष्टपूर्वं
सविस्मयं सा जनता बभाण ।
गोरक्षणार्थं धृतबालरूपः
कृष्णः स्वयं भूमितलेऽवतीर्णः ॥५२॥
जयतु जयतु कृष्णो गोकुल-त्राण-दीक्षः
सकलभुवनदीपो गोपवंशावतंसः ।
तदनु जयतु बालस्तादृशस्तद्व्रतश्च
स्फुरति य इह कोऽपि क्षात्रवंशावतंसः ॥५३॥
जय जय जय जीवोज्जीव जीवेति लोकैः
प्रविकसितमनोभिः कण्ठशंखावकीर्णाम् ।
विनयविनतमूर्ध्ना गर्जवर्षा दधानः
प्रथममनुबभूव स स्वमूर्धाभिषेकम् ॥ ५४॥
श्रीकृष्ण-दिव्यवपुषः शिवबालकस्य
स्वप्राणरक्षणचणस्य वपुर्लिहन्ती ।
वात्सल्यमाविरकरोदथवा प्रसादं
सा गौरगौरपि सुगौरवमात्मसंस्थम् ॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये**
**"राजधानीप्रवासः" नाम सप्तमसर्गः॥**

## श्रीशिवराज्योदये महाकाव्ये
## " पारतन्त्र्यजुगुप्सा " नाम अष्टमः सर्गः

प्रत्यागतः परिनिरीक्ष्य स राजधानीं तां म्लेच्छसंस्कृतिनिदर्शनकेन्द्रभूताम् ।
दृङ्मोहिनीमपि जुगुप्सितसंनिवेशां मेने क्षुधेव पितृकाननवाटिकाभाम्॥१॥
तां दुर्जनर्द्धिमिव गर्हितलोकसेव्यां दुर्दर्शनीयमणिकाञ्चनकोषजाताम् ।
स्मृत्वा पुरीं स परिवर्जितपुण्यशीलां मेने मनः कलुषदूषितमात्मनोऽसौ॥२॥
सौधावलीविमलहीरककण्ठहाराम् उद्यानपाटलततिस्फुटभूरिमाल्याम् ।
सद्भावमात्रपरिहीनतरान्तरङ्गां वाराङ्गनामिव जगर्ह स राजधानीम्।३॥
बद्धामसह्यनियमैर्निगडैरिवैनां व्यापन्नधर्मपतिकां हृतभाग्यरेखाम् ।
अन्तर्व्यथाऽस्फुटविशुद्धगिरं स मेने कारालयस्थविधवामिव राजधानीम्॥४॥
हर्म्येषु शैवलमलीमसवर्णभाजा म्लेच्छाधिपत्यपिशुनध्वजसंचयेन ।
आन्दोलितोऽरिनगरानिल एव तस्य प्राज्वालयन्मनसि दुर्धरकोपवह्निम् ॥५
विद्योतिनीं हरजटामुकुटैकभूषां चान्द्रीं कलां यवनमन्दिरशृङ्गकेषु ।
स्मृत्वा निपातितशिवालयनिर्मितेषु शूलप्रहार इव चेतसि तस्य जातः ॥६
कामोपभोगरतदुर्मदशासकानां दुश्चेष्टितैरतिभयार्तकुलीननारीम् ।
तां म्लेच्छराजनगरीं स्मरतः शिवस्य जज्वाल भालनयनप्रखरं मनोऽपि॥
वेतण्डवृन्दविनिरुद्धपथप्रवाहां वाराङ्गनाचटुललोचनमत्स्यपूर्णाम् ।
कङ्कालशेषजनतामिषलुब्धराजग्राहां पुरीं हृदि स वैतरणीं हि मेने ॥८॥

वेश्यासमानविकटोज्ज्वलवेशभाजाम्
उद्रञ्जितभ्रुकुटिगण्डभुजाधराणाम् ।
तत् ताण्डवं पथिषु दुर्मुखषण्ढकानां
नैव क्षणं स्मृतिपथेऽपि शिवः स सेहे ॥९

माणिक्य-नीलमणि-विद्रुम-पद्मराग-गोमेद-मारकत-मौक्तिक-हीरकेषु ।
उद्भासिनीं यवनभूपतिहर्म्यगर्भे लक्ष्मीममन्यत स गर्ह्यतमामलक्ष्मीम्॥
कार्तस्वरोज्ज्वलरसाक्तबृहद्वितान-व्यालम्बिहेममयसूत्रसहस्रनद्धाः ।
अन्तःस्थवर्तिरुचिभास्वररत्नदीपा व्यातेनिरे स्मृतिपथेऽस्य घनान्धकारम्॥

सिंहासने सुमणिकाञ्चनपादपीठे
तं किंप्रभुं च निजधर्मविरुद्धभूतम् ।
स्मृत्वा बलाढ्यनिजबान्धववन्दिताङ्घ्रिं
स्थायी रसोऽस्य सहसा भृशमुद्दिदीपे ॥१२॥
हा क्रीतबन्दिभिरसौ समुदीर्यमाणा
म्लेच्छाधिराज्यविभवस्मृतिहेतुरुच्चैः ।
सा घोषणा श्रुतिपथेऽस्य परिध्वनन्ती
कामं रहोऽपि बिभिदे मनसः समाधिम् ॥१३ ॥

धेन्वातिकातरतरेक्षणमीक्ष्यमाणम् आत्मानमार्तजनवृन्दपरीतमेकम् ।
स्मृत्वा पुनः पुनरुदीरितगूढरोषो निष्कोषितासिगतमात्ममुखं ददर्श ।।१४।।
किं कर्म चेति न विदन् किमकर्म चेति म्लेच्छाधिपत्यदृढवृक्षविपाटनाय ।
प्रज्ञा सुतीव्रपरशुप्रखराऽपि तस्य पाषाणखण्डनविधाविव कुण्ठिताऽभूत् ।।
रात्रौ विनिद्रमतिचिन्तनमग्नचित्तं प्रातः कषायितविलोचनमप्रसन्नम् ।
मध्यन्दिने विगतभोज्यरसं सुतं स्वं दृष्ट्वैव मातृहृदयं विकलीबभूव ।।
सह्यस्य तुङ्गशिखरे लघुगह्वरे वा तीरे प्रगाढसरितो विपिनस्य गुल्मे ।
तीव्रातपेऽन्धतमसे च परिभ्रमन्तमेकाकिनं तमवगत्य जिजाऽऽकुलाभूत् ।
प्राणप्रियं सुतममुं विमनायमानं विज्ञाय तद्वदनलोचनहावभावैः ।
माता जिजाप्यनुबभूव समामवस्थां पुत्रान्तरङ्गसमवर्ति हि वत्सलत्वम् ।।
"वत्स! व्यथाकुलमना इव लक्ष्यसे रे ब्रूषे न मामपि हि किंचन मातरं ते ।"
पृष्टोऽपि कोमलगिरेति भृशं जनन्या तस्थौ स्वहस्ततलसंस्थितमस्तकोऽसौ
दृष्ट्वा च मातुरनुरोधमखण्डितं तं चित्तेऽभवद् द्रुत इवैव स मातृभक्तः ।
कृच्छ्रादुवाच हृदयोद्भवमात्मदुःखं निष्पीडितस्वजनदुःखनिरीक्षणोत्थम् ।।
"मातः! कृपा भगवतो करुणाघनस्य ह्याजन्मनोऽविरतमेव मयाऽनुभूता ।
नैव श्रुतं क्वचन किञ्चन वीक्षितं वा ग्रामे निजे निजमनःप्रतिकूलभूतम् ।।

सर्वेऽत्र सन्ति सुखिनश्च निरामयाश्च
पश्यन्ति भद्रमखिलं सकलत्रपुत्राः ।
सोऽयं भ्रमो जननि! मेऽद्य लयं प्रयातो
ह्यालोक्य तां यवनशासितराजधानीम् ।।२२।।

नालोकितं किमपि देवकुलं न भग्नं
नैव श्रुतं जनवचः खलु यन्न दीनम् ।
स्पृष्टं न तीर्थसलिलं न विदूषितं यत्
ज्ञातं च तन्न खलु यत् प्रियमुत्तमानाम् ।।२३।।

दृष्ट्वा च मातरखिलान्निजधर्मबन्धून्
प्रायेण शक्तिविकलांश्च भयाकुलांश्च
दुष्पारतन्त्र्यनरके परिपच्यमानान्
हा हा निखात इव मे हृदि वज्रकीलः ।।२४।।

आश्चर्यमेव परमं समवेक्षितं तद्
यद् बुद्धिशक्तिनृपनीतिसमृद्धिमन्तः ।
अस्मत्समाजगुरवोऽप्यरिराजपादम्
आरञ्जयन् स्वनिटिलाङ्कितकुङ्कुमेन ।।२५।।

चामीकरोज्ज्वलविलम्बिविभूषणाढ्या
आनामितोच्चशिरसो द्रुतगामिनश्च

दृष्टा मया हि तुरगा इव शासकानाम्
अस्मत्समाजतरुणा विहताभिमानाः ॥२६॥
म्लेच्छाधिपाङ्घ्रिरमभितो गुरुगौरवेण
हा हा नतानि पलितान्यपि मस्तकानि
अम्ब! त्वदङ्घ्रिविनतं परमेकमेव
नैवानतं शिर इदं खलु मामकीनम् ॥२७॥
ह्रीः कर्षतीव रसनां हृदयावगूढा
क्रोधानलश्च सहसा क्वथतीव चेतः ।
स्मृत्वैव घोरविपदः सकलाङ्गनानाम्
अम्ब! ब्रवीमि किमतःपरमात्मदुःखम् ॥२८॥
किं जीवितेन विभवेन सुखेन तेन
किं भारभूतकरवालधनुःकृपाणैः ।
किं पौरुषेण यदि न प्रभवामि पातुं
गो-देव-वेद-वनिता-द्विजसाधुसंघान् ॥२९॥

रात्रिञ्चरप्रकुपितेन रघूत्तमेन ह्येकाकिनाऽपि विपिनेचरसङ्गतेन ।
त्रेतासु वीरचरितं चरित यदेव कुर्यादयं तव सुतोऽपि कलौ तदेव ॥३०॥
स्वत्वाभिमानपरिपूर्णविशालवक्षो-निक्षिप्तदक्षिणकरोत्थितनादगाढाम् ।
रोषातिरेकविततध्वनिनाऽऽत्मजेन प्रोद्घोषितां श्रुतवती जननी प्रतिज्ञाम्॥
आगर्भसम्भवदिनात् क्षणशः स्फुरन्तं तं स्वप्नजागरसुषुप्तिषु चेतयन्तम् ।
संकल्पमात्ममनसः प्रियपुत्रवक्त्रादुच्चैरुदीरितमसौ निपपौ प्रसन्ना ॥३२॥
संकल्पितं स्वहृदयाङ्कुरितं चिराय विज्ञाय कोरकितपल्लवितं सुतान्तः ।
तत् पुष्पितं च फलितं च पुनर्विधातुं साशीर्वचांसि सहसा निजगाद देवी॥३३
"घृष्णेश्वरः स भगवान् स च वैजनाथः सा सह्यगह्वरचरी तुलजाभवानी।
श्रीविठ्ठलः स च गणाधिपतिः स रामः सम्पूरयन्तु शुभमुत्कटवाञ्छितं ते ॥
सह्याद्रितुङ्गशिखराण्यधिसंस्थितास्ते दुर्गाश्च दुर्गमतमा वनवासगूढाः ।
ध्यानस्थिरा मुनिवरा इव सर्व एव त्वां गोपयन्तु हृदयेषु शिवं शिवाय ॥३५
श्रीरामचन्द्ररणकर्मसहायशूरा ये वानरा इव नरा गिरिसञ्चराश्च ।
ते सर्व एव दृढसंघटिता भवन्तु त्वत्कांक्षितं झटिति साधयितुं पवित्रम्॥३६॥
एकीकृतस्वसुखदुःखहिताहितानाम् एकानुशासनतृणीकृतजीवितानाम् ।
एकात्मनां सवयसां नरपुङ्गवानां व्यग्रो बभूव दृढसंघटने शिवाजिः ॥३७॥
शुभतमतनुकान्तिःकोऽपि सह्याद्रिगर्भे गुणगणशुचिगन्धिः पारिजातः प्रफुल्लः
इति कथमपि वार्तां ज्ञातवन्तःसमन्तादहमहमिकया ते मीलिता बालभृङ्गाः।

॥ इति श्रीशिवराज्योदये महाकाव्ये 'पारतन्त्र्यजुगुप्सा' नाम अष्टमः सर्गः ॥

## " स्वातन्त्र्यप्रतिज्ञा " नाम नवमः सर्गः ।

ते सर्वे नरशार्दूलाः सह्याद्रिवनवासिनः ।
निर्भयाः परितश्चेरुः शत्रुवर्गभयंकराः ॥१॥
निगूढतीव्रशस्त्राणां तेषामत्युग्रतेजसाम् ।
शिव एव नियन्ताऽऽसीद् गणानामिव शंकरः ॥२॥
शिवाजिमभितो वीरा भ्रमन्तस्ते विरेजिरे ।
ज्योतिष्टोमाग्निनिर्गच्छत्स्फुलिङ्गा इव भास्वराः ॥३॥
चापल्यपाटवं तेषां तदालोक्य प्लवङ्गमाः ।
त्रपया कृष्णतुण्डा वा रक्ततुण्डा इवाभवन् ॥४॥
गूढप्रसर्पणे तेषां वीक्ष्य पाटवमुत्कटम् ।
भयाकुला इवासर्पन् परितस्ते सरीसृपाः ॥५॥
उग्रकर्मभिरापूर्णस्तैर्भूचरसरीसृपैः ।
सह्योऽसह्यं जहासेव सागरं मकरालयम् ॥६॥
पदे पदेऽनुकुर्वाणास्तेषां व्यालुम्पनं वृकाः ।
महोदरा नहि प्रापुस्तदभ्यासेऽपि कौशलम् ॥७॥
सत्वरारोहणैस्तेषां हेलयोच्चैस्तटेष्वपि ।
उत्तुङ्गशिखरः सह्यो नूनं वामनतां गतः ॥८॥
तदश्वखुरसम्पातोत्थापितैर्धूलिसंस्तरैः ।
आच्छादितो बभौ सह्यो मैनाक इव सागरे ॥९॥
करालाक्रन्दितैस्तेषां निर्जने गिरिगह्वरे ।
मतङ्गजा भयत्रस्तास्त्यक्तनिद्रा इवाभवन् ॥१०॥
परिभ्रमन्तो गहनं शिवराजपुरस्सराः ।
आदित्या इव संग्रामे कार्तिकेयानुयायिनः ॥११॥
पराक्रमे महासिंहा हरिणास्तु पलायने ।
मूषका गूढसञ्चारे वीरास्ते शिवसैनिकाः ॥१२॥

वायसा रन्ध्रविच्छेदे कोकिलाः कलभाषणे ।
भ्रमराः संततोद्योगे कुशलाः शिवसैनिकाः ॥१३॥

गरुडा इव सर्पाणां वानरा इव रक्षसाम् ।
बलाका इव मीनानां म्लेच्छानां शिवसैनिकाः ॥१४॥

पूर्वजन्मदृढाभ्यासाज्जन्मसिद्धां कलां पुनः ।
तुङ्गवृक्षाग्रसञ्चारैर्दर्शयन्तस्तमस्वपि ॥१५॥

शिवसेवा परो धर्मः शिवराजो महेश्वरः ।
शिवाज्ञा वेदशास्त्राज्ञा येषां ते शिवसेवकाः ॥१६॥

आज्ञां पालयितुं येषां शिवराजमुखोद्गताम् ।
वज्रादपि कठोराणि शरीराणि मनांसि च ॥१७॥

भस्मीकृतस्वार्थसौख्यपरिचर्चितविग्रहाः ।
स्वराज्ययोगनिर्मग्ना धन्यास्ते वीरयोगिनः ॥१८॥

शत्रुपूरे सरित्पूरे विनिपत्य स्वयं मुदा ।
क्वचिदग्नौ रणाग्नौ वा चिकीर्षन्तो महाक्रतुम् ॥१९॥

स ययौ सह तैर्दूरमतिप्रेष्ठैः सुहृज्जनैः ।
अन्तश्चरेभ्यः प्राणेभ्यः प्राणैरिव बहिश्चरैः ॥२०॥

निर्जनारण्यमध्यस्थभग्नदुर्गान्तरस्थितम् ।
विध्वस्तभित्तिशिखरं किञ्चिदालोक्य मन्दिरम् ॥२१॥

संतस्थिवान् स सहसा प्राह सर्वान् सुहृज्जनान् ।
"अप्रणम्य न गन्तव्यं दैवतं पुरतः स्थितम्" ॥२२॥

तदा सम्प्रस्थिताः सर्वे तदादेशवशंवदाः ।
सवयस्काः किशोरास्ते प्रवेष्टुं भग्नमन्दिरम् ॥२३॥

लूतातन्तुभिराकीर्णे गर्भागारेऽवलोकितम् ।
चिरादनभिषिक्तं तैः स्थाणुलिङ्गं पुरातनम् ॥२४॥

कृताभिषेकैस्तैर्वीरैरभिषिक्तः स ईश्वरः ।
कृत्ताङ्गुल्यग्रनिर्गच्छद्रक्तधाराभिरेव च ॥२५॥

तद्रक्तधारासंक्लिन्नं शिवलिङ्गं तदा बभौ ।
यथान्धकारध्वंसोत्कमुद्यन्मार्तण्डमण्डलम् ॥२६॥

अभितः स्थाणुलिङ्गं ते गलदङ्गुलिशोणिताः ।
तस्थिवांसो जगुः सर्वे प्रार्थनां नवकल्पिताम् ॥२७॥

## हर हर हर महादेव

"स्वातन्त्र्यसंगरदीक्षितास्त्वच्चरणशरणागताः ।
वयमविचलनिश्चया हर हर हर महादेव ॥२८॥

उद्दामवेगपुरस्सरा एते वयं गिरिनिर्झराः ।
ध्येयार्णवं समुपेयुषो हर हर हर महादेव ॥२९॥

श्रद्धा हिमाद्रिसमाऽचला शक्तिर्नृसिंहनिभाऽतुला ।
आविर्भवत्वस्मासु सा हर हर हर महादेव ॥३०॥

वज्रः शिरसि यदि निष्पतेद् वह्निर्वपुषि यदि संविशेत् ।
न हि निश्चयो नः प्रस्खलेद् हर हर हर महादेव ॥३१॥

अश्वा यथा झञ्झानिलाः खड्गाः पुनः प्रलयानलाः ।
सम्प्रस्फुरन्तु हि नः सदा हर हर हर महादेव ॥३२॥

मुष्टिर्हि भीमगदायतां भल्लश्च शिवशूलायताम् ।
समराङ्गणे नः सर्वदा हर हर हर महादेव ॥३३॥

चापेषु नः सज्जीकृतेष्वारोपणीया अद्य ते ।
बाणाः पुरत्रयदाहका हर हर हर महादेव ॥३४॥

रुद्र ! तव रौद्रात्मता जायेत नो हृत्संस्थिता ।
आदेहपातमनारतं हर हर हर महादेव ॥ ३५ ॥

त्वत्सज्जकोदण्डोद्भवं टङ्कारमतिशयभैरवम् ।
प्रस्फोटयास्मद्गर्जिते हर हर हर महादेव ॥३६॥

श्रीकण्ठ ! कण्ठे धेहि तां विनिकृत्तरिपुमुण्डाङ्किताम् ।
त्वद्वाञ्छितां नवमालिकां हर हर हर महादेव ॥३७॥

त्वद्विग्रहैकविलेपनं कुर्याम रिपुतनुभास्मनम् ।
सङ्ग्रामघोरहुताशने हर हर हर महादेव ॥३८॥

त्वन्मस्तकोच्छलदापगा स्वरयप्रदीर्णमहानगा ।
अस्मन्मनांसि पुनातु सा हर हर हर महादेव ॥३९॥

त्वद्भाललोचनपावको ब्रह्माण्डमण्डलदाहकः ।
नेत्रेषु नः सम्भ्राजतां हर हर हर महादेव ॥४०॥

त्वत्कण्ठकुण्डसुसञ्चितं हालाहलं परमाद्भुतम् ।
वम तीक्ष्णशस्त्राग्रेषु नो हर हर हर महादेव ॥४१॥

भुजगः स ते भुजकङ्कणं भव ! भवतु नः संरक्षणम् ।
समराङ्गणेऽरिनिषूदने हर हर हर महादेव ।।४२।।
त्वद्विग्रहार्धसमाश्रिता रणचण्डिका सा देवता ।
युद्धेऽस्तु नश्चाग्रेसरा हर हर हर महादेव ।।४३।।
भरतभुवमतिमङ्गलां हतनिखिलखलरिपुबलाम् ।
कुरु करुणयाऽस्मत्करैर्हर हर हर महादेव " ।।४४।।
श्रीरोहिडेश्वरसनातनमन्दिरान्तः
प्रोद्घोषिता नरवरै रणगर्जना सा ।
सह्याद्रिगह्वरशतप्रतिनादतुङ्गा
संशुश्रुवेऽप्यरिभिरङ्गुलिनद्धकर्णैः ।।४५।।
सा गर्जना हरहरेति शिवप्रणादा
व्याप्नोदरं दशदिगन्तरचक्रवालम् ।
प्रोत्तुङ्गसप्तकुलपर्वतरोधसान्द्रा
कैलाससुस्थितमजागरयन्महेशम् ।। ४६ ।।
म्लेच्छाधिपत्यगुरुपातकभूरिभारां
क्लान्तो धरामविरतं शिरसोद्दधानः ।
चक्षुःश्रवाः श्रमजडाक्षिसहस्रयुग्म-
संस्पर्शिनीमतिपपौ शिवगर्जनां ताम् ।।४७।
सद्भावतुन्दिलमनःपरिनुद्यमान-
वागुद्गतैर्हर हरेति पदैः शिवस्य ।
खं वायुरग्निरिति पञ्चकमुत्क्रमेण
नैमित्तिकं ह्यनुनिमित्तमभूत् पवित्रम्।।४८।।
तां प्रार्थनां हरहरेति निशम्य नूनं
प्रीता हरार्धतनुभाक् सहसा भवानी ।
स्थाणुं विहाय धृतभास्वरखड्गरूपा
दोर्दण्डमाश्रितवती प्रचलं शिवस्य ।। ४९ ।।

।। इति श्रीशिवराज्योदये महाकाव्ये "स्वातन्त्र्यप्रतिज्ञा" नाम
नवमः सर्गः समाप्तः ।।

## श्रीशिवराज्योदये महाकाव्ये
## "स्वातन्त्र्यदिनोदयो" नाम दशमः सर्गः

श्रीरोहिडेशं परितोष्य भक्त्या प्रदक्षिणीकृत्य च मन्दिरं तत् ।
तत्प्रार्थनाशब्दनिनादपूर्णम् समाहितास्तस्थुरमी किशोराः ॥१॥
विमृश्य सचिन्त्य मुहुर्मुहुस्ते स्वप्रार्थनार्थं पुरुषार्थनिष्ठाः ।
आर्द्रेन्धनक्षीणमिवाग्निमन्तः प्राचेतयन् वीररसं निगूढम् ॥२॥
उद्दीपितोदग्रतरप्रतापप्रभूततेजांसि मुखानि तेषाम् ।
विलोक्य लज्जारुणतां दधानो ह्यन्तर्दधे दीप्रसहस्ररश्मिः ॥३॥
क्षपातमस्काण्डनिमग्नमेनम् आलोक्य सह्याद्रिमलौकिकास्ते ।
प्रतस्थिरे संजनयन्त उच्चैः रात्रिञ्चराणामपि भीतिकम्पम् ॥४॥
आलोकयामासुरतिप्रसन्ना नभोनिलीनास्त्रिदशाः समस्ताः ।
तं दिव्यभावं शिवमित्रसंघं नक्षत्रचक्षुर्भिरिवानिमेषैः ॥५॥
तत्प्रार्थनासत्कृतिसाक्षिणस्ते पुराणवृक्षाः परमादरेण ।
निम्नोन्नताध्वानमदर्शयंस्तान् खद्योतविद्योततनुप्रदीपैः ॥६॥
दिनेषु गच्छत्सु जिगीषवस्ते दिदृक्षवो दुर्गमजय्यमेकम् ।
पर्यभ्रमन् दुर्गमसह्यगर्भे चारैरनालोकितगूढचाराः ॥७॥
मार्दङ्गिका वा यमपट्टिका वा संन्यासिनो वा चिरमौनिनो वा ।
शिवाज्ञयाऽव्याजहृदो युवानोः व्याजेन केनाप्यचरन् समन्तात् ॥८॥
कोऽप्येकदा शत्रुरहस्यवेदी रहस्यवादीत् स्वगतं रहस्यम् ।
तदा तदाकर्णयता शिवेन कर्णायितं फुल्लविलोचनेन ॥९॥
गते चरे सत्फललाभतुष्टे शिवाजिरुत्कण्ठितमानसोऽसौ
प्रासादपूजालयमेत्य भक्त्या प्रणम्य चानर्च चिरं भवानीम् ॥
ततश्च मातुश्चरणारविन्दे शिरोऽरविन्दं सुचिरं निधाय ।
भक्त्या जयाशीर्वचनं ययाचे मनोगतं किंचिदभाषमाणः ॥११॥
तथा सुतं तं प्रणतं विलोक्य संयाचमानं विजयाशिषं च ।
पुनः पुनर्दक्षिणपाणिनाऽसौ पस्पर्श मूर्धानममुष्य माता ॥१२॥
जगाद चैनं विनतोत्तमाङ्गं किं केवलामाशिषमीहसे रे ।
अनीहमानेऽपि सुतेऽस्ति मातुः वरप्रसादो न तु केवलाशिः ॥१३
स मन्दमन्दं जननीमुवाच जानीहि मातः सफलां निजेच्छाम् ।
अद्य प्रभृत्येव समारभेऽहम् अभूतपूर्वां चिरजत्रयात्राम् ॥१४॥
अद्य प्रभृत्यम्ब! महाभिषेकं प्रवर्तयिष्ये रणचण्डिकायाः ।
मदोद्धताराततिनिकृत्तकण्ठ-समुच्छलच्छोणितवर्षणेन ॥१५॥

अद्य प्रभृत्येव कृपाणरूपा कराश्रिता मे प्रखरा भवानी ।
तमालनीलाऽप्यरिरक्तरक्ता रणे तडित्-ताण्डवमेव कुर्यात् ॥१६

अद्य प्रभृत्येव नभोविभागे स्फुरेज्जयस्तम्भविरोपितोऽसौ ।
काषायवर्णो भगवद्ध्वजो नः प्रस्पर्धमानोऽरुणरोचिषैव ॥१७॥

अद्य प्रभृत्येव निजप्रतिज्ञा-साफल्यमापादयितुं यतेय ।
जयैषिणो मे विजयैकहेतुः प्रदीयतां माङ्गलिको वरस्ते ॥१८॥

अन्येद्युरेवोषसि किंवदन्ती समागता श्रोत्रपथं जिजायाः ।
यदुज्ज्वलाभो भगवद्ध्वजोऽसौ प्रद्योतते तोरणदुर्गशृङ्गे ॥

प्रभातकाले विजयप्रवृत्तिं पुनश्च तां पुत्रपराक्रमोत्थाम् ।
श्रुत्वैव संदेशहरस्य वक्त्रंमापूरयत् सा मधुशर्कराभिः ॥२०॥

सुवर्णसूत्रग्रथितप्रभूत-महार्हरत्नावलिमात्मकण्ठात् ।
द्रुतं विनिष्कास्य ददौ च तस्मै प्रहर्षरोमाञ्चितपुण्यमूर्तिः ॥ २१

विज्ञाय तां तोरण इत्यभिख्यां दुर्गस्य तस्य प्रथमार्जितस्य ।
प्राहोत्ततं तोरणमद्य नूनं स्वराज्यहर्म्ये विजयश्रियैव ॥२२॥

बबन्ध सर्वेष्वपि मन्दिरेषु स्वयं प्रतिद्वारमुदारपर्णम् ।
गन्धाढ्यपुष्पालिमिलन्मिलिन्दं मनोहरं तोरणमुज्ज्वलाभम् ॥२३

ग्रामीणवर्गाः सकलत्रपुत्राः परस्परं शार्कमुष्टिपूर्णैः ।
वक्त्रैरवोचन् तदनुक्तपूर्वं स्वबान्धवानां विजयैकवृत्तम् ॥२४॥

गृहे गृहे प्राङ्गणतोरणेषु कुलाङ्गनाभी रचिता सुरम्या ।
प्रदोषकालेऽखिलदोषहन्त्री परिस्फुरद्दीपकतोरणाली ॥२५॥

श्रीरामदासप्रमुखैश्च सद्भिः ध्यानावलग्नाक्षिभिरीक्षितान्तः ।
हृत्पुण्डरीके सहसैव काचित् नवोदिता दीपकतोरणाभा ॥२६॥

जगौ तुकाराममुनिर्नवीनम् अभङ्गबद्धं जयगीतमुच्चैः ।
तदा तदाकर्ण्य जहर्ष चेतः पाषाणमूर्तेरपि विठ्ठलस्य ॥२७॥

पितुर्गृहे बालसखीजनेन क्रीडारताऽसौ शिवधर्मपत्नी ।
कपोतमेकं पदलग्नपत्रं सुतोरणद्वारगतं ददर्श ॥२८॥

भैमीव सा द्रागनुधाव्य लोलं सपत्रमुद्गृह्य च पत्रिणं तम् ।
ज्ञात्वा जयोदन्तममुं स्वभर्तुः प्रहर्षमत्तेव ननर्त मुग्धा ॥ २९॥

कर्णाटकस्थेन शहाजिनाऽपि स्वतोरणद्वारगतोऽह्नि तस्मिन् ।
दृष्टः प्रनृत्यन् विततोर्ध्वबर्हः शुभंकरः कश्चन नीलकण्ठः ॥३०॥

म्लेच्छाधिपानां भवनेषु भव्येष्वाकस्मिकोत्पातवशादखण्डन् ।
लसन्महामौक्तिकसुन्दराणि तस्मिन् दिने काञ्चनतोरणानि ॥३१

स एव बालो ह्यनतोत्तमाङ्गः स्वहृत्स्थलारोपितदीर्घखड्गः ।
सन्तर्जयन् स्वप्नगतेन दृष्टो विजापुरेशेन भयार्दितेन ॥३२॥

स्वप्नेऽफझुल्लः सहसा ददर्श महोदरं स्वं प्रविदीर्यमाणम् ।
अकल्पिताश्लेषकृतोद्धतेन तेनैव बालेन सभागतेन ॥३३॥
दिल्लीश्वरस्यारुणवर्णदुर्गे उत्तोरणद्वारमुपेत्य तस्थौ ।
दिवा दिवाभीततती रुवन्ती नक्तं पुनर्वायसपङ्क्तिरन्धा ॥३४॥
नवग्रहोद्भासिविशालरत्न-स्फुरत्प्रभामण्डलमह्नि तस्मिन् ।
दिल्लीशसिंहासनपार्श्ववर्ति च्छत्रं प्रचस्खाल कुतोऽपि हेतोः॥३५॥
भावी स दिल्लीपतिरप्यपश्यत् स्वप्ने तदैवोत्तररात्रिकाले ।
वपुर्निजं दक्षिणदिग्विभागे गर्तस्थितं देवगिरेः समीपे ॥३६॥
नवस्वराज्यादिमपीठभूतं पुराणदुर्गं स्ववशंगतं तम् ।
शिवाजिरालोक्य विशीर्णदीर्णं संस्कारयामास विशेषभक्त्या ॥३७॥
स तोरणद्वारगतं विभग्नं शिवालयं वीक्ष्य विदूनचेताः ।
सुशिल्पसंस्कारममुष्य चक्रे भक्त्या स्वयं शिल्पिभिरर्थ्यमानः ॥३८॥
तद्वास्तुवासिन्यधिदेवता च संस्कारसेवाभिरुपास्यमाना ।
समुज्ज्वलं काञ्चनकोषभूतं निजस्वरूपं प्रकटीचकार ॥३९॥
जयध्वनिं वा शिवसैनिकानां संकेतशब्दं ध्रुवमूहमाना ।
विनिःसृता म्लेच्छमहीन्द्रकोशात् हिरण्मयी श्रीः शिवमाविरासीत्॥
स क्रान्तदर्शी गुरुरह्नि तस्मिन् दादोजिरह्नाय शहाजिसूनोः ।
शुक्लेन्दुरेखामिव विश्ववन्द्यां प्रावर्तयन्नूतनराजमुद्राम् ॥४१॥
स्वधर्मनिष्ठः शिवराजभक्तः दादोजिना नव्यनृपाज्ञयैव ।
स्वराज्यलक्ष्म्यालय-तोरणाभं संरक्षितुं दुर्गममुं नियुक्तः ॥४२॥

आपारतन्त्र्यदिवसात् प्रतिपाल्यमानः
स्वातन्त्र्यभाग्यदिवसः खलु भारतस्य ।
आविष्कृतो यवनशासनकालरात्रौ
तैः श्रीशिवाजिपदचिह्नचरैः किशोरैः ॥४३॥
आहूतो ह्यगणितसाधुवृन्दपुण्यैः
आकृष्टः समरमखार्पितस्वदेहैः ।
आयातो जनगणभागधेयहेतुः
स्वातन्त्र्योदयदिवसोऽस्तु वः शिवाय ॥४४॥

॥ इति श्रीशिवराज्योदये महाकाव्ये "स्वातन्त्र्यदिनोदयो" नाम दशमः सर्गः समाप्तः ॥

— —+— —

## श्रीशिवराज्योदये महाकाव्ये
## "विजययात्रा" नाम एकादशः सर्गः

ततः स तोरणाधीशो रणाधीनमनाः शिवः।
खड्गं निष्कोषितं कोशे न स्थापयितुमैहत॥ १॥
सुहृदस्तान् समाहूय विजयानन्दतुन्दिलान्।
स उवाच महातेजास्तत्तेजस्तेजयन्निव॥ २॥
हं हो वीरा नरव्याघ्रा उदयोऽस्तु चिराय वः।
येषां प्रथमसङ्ग्रामे प्रसन्ना जगदम्बिका॥ ३॥
न ममैकाकिनो नूनं जयः सम्भाव्यतामयम्।
यत्सम्भूय समुत्थाने सर्वेषामेकजीवता॥ ४॥
एकव्रता एकजीवा वयं सर्वे जयैषिणः।
अग्रेसरा सदाऽस्माकं भवानी जयरूपिणी॥ ५॥
न मनागपि सन्देहो हृदि धार्यो जयं प्रति।
यत्काङ्क्षति महादेवः स्वयमस्मन्महोदयम्॥ ६॥
यत्र यत्र गमिष्यामः शत्रुराज्यजिगीषया।
तत्र तत्र ध्रुवं भूयाज्जयोऽस्माकं धुरन्धरः॥ ७॥
दुर्गमेकमिमं जित्वा नूनं विप्रकृतो महान्।
म्लेच्छराज्यमयोऽस्माभिर्नागः पञ्चफणाधरः॥ ८॥
विशालभोगिना येन बद्धा ह्यापादमस्तकम्।
मातृभूमिरियं पुण्या दुःसहामश्नुते दशाम्॥ ९॥
कालियेनेव यमुना दूषिता येन हिन्दुभूः।
गोपानामिव हिन्दूनां जीवनं मरणास्पदम्॥ १०॥
स महासैन्यसम्भारफूत्कारैः परिदीपयेत्।
रणदावानलं शीघ्रं परितोऽस्मान् सुदुर्धरम्॥ ११॥
अनल्पजययात्रायाः स्वल्पोऽयं प्रथमो जयः।
आवेशेन तदश्रान्तं युध्यतां सम्प्रयुध्यताम्॥ १२॥
समिधस्तनवो यत्र कुसुमानि शिरांसि च।
तत्राहवमहायज्ञे प्रवर्तन्ते जयैषिणः॥ १३॥
हननं हवनं यत्र गर्जना मन्त्रजागरः।
रणयज्ञः स नः श्रेयान् क्षात्रधर्मानुयायिनाम्॥ १४॥
विद्यावयस्तपोज्येष्ठो यदस्मद्गुरुरादिशेत्।
तदेव ह्यनुतिष्ठामो गुरोराज्ञा गरीयसी॥ १५॥"

मन्त्रशक्तिमयीं वाचं पातुमुत्कण्ठितोऽपि सः।
स्वगुरोरग्रतस्तस्थौ प्रह्वाञ्जलिररिन्दमः ॥ १६ ॥
स नातियूनां मध्यस्थस्तेषां निष्क्रान्तयौवनः।
गुरुर्दादोजिरारेजे कपीनामिव जाम्बवान् ॥ १७ ॥
तनूरुहसिते यस्य प्रक्षीणतनुमन्दिरे।
राष्ट्रभक्तिर्भवानीव जागर्ति स्म निरन्तरम् ॥ १८ ॥
हृदयस्थण्डिले यस्य ब्राह्मसंस्कारपावने।
पिण्डीकृततनुस्तस्थौ स्वाभिमानमहेश्वरः ॥ १९ ॥
मुहुः प्रकम्पमानेन मूर्ध्ना सम्मानयन्निव।
विक्रमैकरम्यां वाचं प्रियशिष्यमुखोद्गताम् ॥ २० ॥
स उवाच जराजीर्णविग्रहो विग्रहोत्सुकः।
संग्रहः पुण्यबोधानां निग्रहः पापकर्मणाम् ॥ २१ ॥
"शिवराज ! चिरं जीव जय विन्दस्व सद्यशः।
ब्रह्माण्डमण्डले जीयात् त्वत्कीर्तिरनपायिनी २२ ॥
नैवाकृतसुकृत्यानां भवत्येवंविधा मतिः।
त्वय्येकस्मिन् यथा दृष्टा विमर्शसहचारिणी ॥ २३ ॥
मनुष्याणां सहस्रेषु क्वचिदेवावलोक्यते।
कार्याकार्यविवेकार्थं प्रतिभा विश्वतोमुखी ॥ २४ ॥
परमेशप्रसादेन जन्मसिद्धेव सा त्वयि।
अभङ्गा भाग्यरेखेव त्वदीये पाणिपल्लवे ॥ २५ ॥
सहसा सत्वरं कार्यं स्वधिया यत् करिष्यसि।
त्वदीयं तद् भवेत् सर्वं सद्विवेकविजृम्भितम् ॥ २६ ॥
युद्धमुक्तं भगवता स्वर्गद्वारमपावृतम्।
तत्स्वराष्ट्रहितार्थं चेत् मुक्तिद्वारं मतं मम ॥ २७ ॥
वर्षिष्ठस्यापि मे बाहू स्फुरतो हि युयुत्सया।
यद् राष्ट्रमिदमस्माकमाक्रान्तं यवनाधमैः ॥ २८ ॥
योगिभिश्चापि कालेऽस्मिन् युद्धयोगेन साध्यताम्।
आत्ममुक्तिं तिरस्कृत्य राष्ट्रमुक्तिर्महीयसी ॥ २९ ॥
संन्यासिनाऽपि कालेऽस्मिन् पारतन्त्र्यभयंकरे।
निरस्य पैप्पलं दण्डं दण्डनीतिर्विलम्ब्यताम् ॥ ३० ॥
आरम्भशूरा एवैते दाक्षिणात्या इतीह नः।
परीवादोऽस्ति यो रुढः सोऽधुना व्यपनीयताम् ॥ ३१ ॥
शूरता याऽधुनारम्भे दुर्गेऽत्र प्रकटीकृता।
क्रमशो वर्धयध्वं तामासाम्राज्यफलोदयम् ॥ ३२ ॥

यदुक्तं शिवराजेन तद्धि श्रेयस्करं परम् ।
स्वदेशधर्ममुक्त्यर्थं युध्यतां सम्प्रयुध्यताम् ।। ३३ ।।
श्रुत्वा विक्रमसन्देशमाप्तप्रोक्तं तथाविधम्
आविर्भूतरणावेशाः जगर्जुः शिवसैनिकाः ।। ३४ ।।
तानाजि-बाजि-येसाजि-नेताजि-प्रथिताभिधाः ।
विष्णोरिव शिवस्यासन् बाहवः शस्त्रशालिनः ।। ३५ ।।
प्रतीक्षमाणा राजाज्ञां ते विक्रमसमुत्सुकाः ।
उदञ्चितैः कृपाणाग्रैर्नभ एव व्यदारयन् ।। ३६ ।।
निःसाण-निःस्वनं काले समाकर्ण्य प्रतस्थिरे ।
यथादेशं यथाभागं समन्ताद् दिग्जिगीषया ।। ३७ ।।
गिरिदुर्गो मुरुम्बाख्यः कैश्चिदाक्रामितस्तदा ।
तोरणप्रतिवेशीव प्राच्यामुच्चैरवस्थितः ।। ३८ ।।
नवीनशिल्पसंस्कारैर्यथायोगमलंकृतः ।
मुरुम्बः स नवां भेजे श्लाघ्यां राजगडाभिधाम् ।। ३९ ।।
तोरणस्य सखेवान्यो नातिदूरे व्यवस्थितः ।
कुवारिगड इत्याख्यः कैश्चिदाक्रामितस्ततः ।। ४० ।।
संस्कार्य वारिकुण्डानि तत्रत्यानि विशोध्य च ।
स कुवारिगडो नीतः सुवारिपदपात्रताम् ।। ४१ ।।
म्लेच्छराज्यमहाम्भोधौ दुर्गत्रयमसौ जयन् ।
त्रिपुरारेस्तुलां प्राप शिवस्य सहसा शिवः ।। ४२ ।।
सह्याद्रिशिखरस्थेन तेन दुर्गत्रयेण च ।
म्लेच्छसाम्राज्यहृदये त्रिशूल इव रोपितः ।। ४३ ।।
चित्तवृत्तिरिवाजय्या गह्वरेष्ठा जयावली ।
योगिनेव शिवेनासौ युक्त्यैव हि वशीकृता ।। ४४ ।।
चन्द्रराव इति ख्यातो मोरेवंशोद्भवो युवा ।
शिवराजाज्ञया कश्चित् तत्स्वामित्वे न्ययुज्यत ।। ४५ ।।
सह्याद्रिगजराजस्य गण्डाभोग इवोन्नतः ।
कोण्डाणाख्यो महादुर्गो विना युद्धं विनिर्जितः ।। ४६ ।।
भूमिदुर्गः शिवबलैर्जितः शिरवलाभिधः ।
सुभानमङ्गलाख्यश्च जाङ्गलोऽपि तथाऽपरः ।। ४७ ।।
यच्चक्रषट्कमवभिद्य विमुक्तिकामः सामर्थ्यमाप स हि सह्यचरः समर्थः ।
तद्दुर्गषट्कमवजित्य जिवारिवर्गः श्रीश्रीशिवाजिरपि तद्वदरात्यजय्यम् ४८

इति श्रीशिवराज्योदये महाकाव्ये
" विजययात्रा "नाम एकादशः सर्गः समाप्तः ।।

(४४जयावली-इयम् अरण्यमयी भूमिः जावळी नाम्ना महाराष्ट्रे प्रसिद्धा ।)

# श्रीशिवराज्योदये महाकाव्ये
# " शत्रुव्यथा " नाम द्वादशः सर्गः ।

उत्तिष्ठमानं शिवराजमेवं दिने दिने दुर्जयसह्यगर्भे ।
ज्ञात्वा पराभूतमहाजनेभ्यः क्रुधा प्रजज्वाल विजापुरेन्द्रः ॥१॥
सेनासुहृत्कोशविवर्जितस्य विशेषतो हिन्दुकुलोद्भवस्य ।
अकल्पितोत्थानमिदं शिवस्य मेने स मूर्ध्नीव पदाभिघातम् ॥२॥
नवस्फुलिङ्गं तमरातिरूपमलिपष्ठमप्युज्ज्वलदाहशक्तिम् ।
स कल्पनायामपि नो विषेहे स्वकीयराज्याङ्गमभिग्रसन्तम् ॥३॥
यदा यदा तद्विजयप्रवृत्तिम् आकर्णयामास स दत्तकर्णः ।
तदा तदा सोऽनुबभूव कर्णे सुदुःसहं वृश्चिकदंशमेव ॥४॥
अन्तःस्थरोषानलसाक्षिभूतं तदक्षियुग्मं स्फुटलोहिताभम् ।
तं धूम्रपानोचितकुण्डसंस्थं तिरश्चकारेव समिद्धमग्निम् ॥५॥
सरोषदष्टाधरपल्लवोत्था ह्यसृङ्मयी काचन शोणलेखा ।
तस्यासुरीं शोणितमात्रशाम्याम् आविश्चकारेव महापिपासाम् ॥६॥
दीर्घं च शोणीकृतमात्मकूर्चं मुहुर्मुहुर्भूरि परामृशन् सः ।
सञ्चिन्तयामास रहः सदैव रोगीव रोगप्रशमाभ्युपायम् ॥७॥
एकाकिनो नीतिविदोऽपि बुद्धिः नैवोचिता युक्तिविनिर्णयाय ।
मत्वेति शक्तित्रयसंयुतोऽपि स मन्त्रिभिर्मन्त्रयितुं चकाङ्क्ष ॥८॥
ते धमकेतुप्रखरं परीता विजापुरेन्द्रं प्रखला अमात्याः ।
पापग्रहा नूनमनूनरोषाः सञ्चिन्तयन्तो ह्यशिवं शिवस्य ॥९॥
शिवाक्रमव्याकुलशेमुषीकान् मदोद्धतानप्यवनम्रशीर्षान् ।
तानाह धीरान् यवनाधिराजः तदिङ्गितं वेत्तुमना मनस्वी ॥
चतुर्दिगन्तं विततं चिराय मोहम्मदीयं हि यदाधिपत्यम् ।
तदद्य सह्याद्रिचरेण विद्धं महाम्बरं क्षुद्रतराखुनेव ॥११॥
खद्योतको भास्वति भासमाने प्रद्योततां क्वापि कदाचिदत्र ।
परन्तु हिन्दुर्न महाप्रतापी मोहम्मदीये प्रखराधिराज्ये ॥१२॥
ज्वलन्महाङ्गारचयेऽपि कुण्डे प्रवर्धतां काचन वल्लरीह ।
न जातु देशेऽत्र तु हिन्दुशक्तिः मोहम्मदीये प्रखराधिराज्ये ॥१३॥
झञ्झानिले दुर्धरवृष्टिपूर्णे स्थिरीभवेत् कश्चन दीपकोऽपि ।
परन्तु नो हैन्दव-वंशदीपः मोहम्मदीये प्रखराधिराज्ये ॥१४॥

क्षुधार्तकण्ठीरवमस्तके वा शालावृकः कोऽपि पदं निदध्यात् ।
न साहसे जातु बलिष्ठहिन्दुः मोहम्मदीये प्रखराधिराज्ये ॥१५॥
विलङ्घयेद् बाहुबलेन कश्चित् कदाचिदब्धिं मकरालयं तम् ।
न काङ्क्षितं पल्वलफल्गु हिन्दुः मोहम्मदीये प्रखराधिराज्ये ॥१६॥
तृणांकुरश्चापि भवेत् समर्थः खर्जरवृक्षं सहसा विभेत्तुम् ।
आस्माकसाम्राज्यतरोस्तु पर्णं न स्प्रष्टुमीष्टे मनसाऽपि हिन्दुः ॥१७॥
विलूनपक्षश्चटकोऽपि कश्चित् आतीव्रभानूड्डयतां कदाचित् ।
बलिष्ठपक्षोऽपि परं न हिन्दुः मनोरथेनात्र वितस्तिमात्रम् ॥१८॥
अल्ला स्वयं वाञ्छति हिन्दुदेशे पाषाणगोपूजकधर्मनाशम् ।
इस्लामधर्मप्रसरं चिराय मोहम्मदीये प्रखराधिराज्ये ॥१९॥
परन्तु वार्ता विपरीतभूता दूरात् स्फुटन्तीव पिशाचवाणी ।
चिरादनाकर्णितवृत्तसारा मनोऽस्मदीयं तुदतीव मन्दम्" ॥२०॥
विजापुराधीश्वरयेदिलस्य स्वसौख्यहेतोरपि दुःखहेतुः ।
जीवत्यसावित्यवगत्य सर्वे समुत्थिता तेऽरमुदग्रखड्गाः ॥२१॥
उच्चैरवोचन्नमुमात्मनार्थं "जगद्गुरो ! किं व्यथसे मुधैव ।
भृशं प्रमत्तः शशकः स जातु मृगाधिराजस्य किमाधिहेतुः ॥२२॥
जानीमहे तं गिरिगह्वरस्थम् अकारणोन्मत्तमतीव मूढम् ।
येनागतेनात्र पुरा सभायां राजन् ! कृतस्ते प्रथमापराधः ॥२३॥
येनागतेनैव पुरा पुरेऽस्मिन् चतुष्पथे राजपथेऽपि राजन् ।
हन्ताऽस्मदीयस्य च धर्मबन्धोः हन्तव्यहन्तुः कर एव लूनः ॥२४॥
स्वधर्मराज्यप्रतिकूलभूतम् निर्हेतुकं क्षुद्रतमापराधम् ।
वयं न राजेद्र सहामहेऽत्र स्तनन्धयस्यापि हि हिन्दुजस्य ॥२५॥
अव्याहतं वर्षसहस्रमेते ये चास्मदीयैरिह यावदिच्छम् ।
प्रस्कन्दिता हिन्दुजनाः क्षमन्ते न जीवितुं नाथ ! कुतो नु जेतुम् ॥२६॥
कोऽप्यस्मदीयो नृपते त्वदीयाम् आज्ञामनुज्ञामथवाऽऽधुनैव ।
विज्ञाय संग्रामविशेषविज्ञो हन्यादरिं तं समरानभिज्ञम् ॥२७॥
फतेहखानो निजनामधेयं जयार्थमेवेति समूहमानः ।
अरेरमुष्याशु पराजयार्थं स्वयं ययाचे नृपतिं ह्यनुज्ञाम् ॥२८॥
अन्येऽप्यहंपूर्विकया तथैव सङ्ग्रामकण्डूक्षुभिताः समस्ताः ।
जेतुं ग्रहीतुं तमरिं निहन्तुं प्रोचुर्निजां साहसिकीं मनीषाम् ॥२९॥
फतेहखानस्य तथेतरेषाम् उत्साहभाजां समरोत्सुकानाम् ।
स्वराज्यनिष्ठां च तथात्मभक्तिं विज्ञाय राजा स तुतोष चित्ते ॥३०॥

जगाद चामूनतिमन्द्रमीषत्- स्फुटीकृतारञ्जितदन्तपङ्क्तिः ।
गिरा नवाम्भोदनिनादगुर्व्या कोपानलं सान्त्वयितु तदीयम् ॥३१॥
" साम्राज्यसिंहासनवज्रपादा दुष्टारिनिर्दालनशक्तहस्ताः ।
शस्त्रास्त्रसन्नद्धमदङ्गभूताः किं दुष्करं वो जगतीतलेऽस्मिन् ॥३२॥
विनाऽपि सेनामसहायमेनं वनेचरं हिन्दुमतीव तुच्छम् ।
युष्मासु कोऽप्येकतमः समर्थः जेतुं ग्रहीतु सहसैव हन्तुम् ॥३३॥
नैव प्रपश्यामि विमृश्य भूयः प्रयोजनं किंचन संगरस्य ।
किं तर्जनीतर्जनमात्रसाध्ये कार्ये हि कार्यं प्रखरैः कृपाणैः ?॥३४॥
बिभीषिकामेव विलोक्य दूरात् सुदुर्धरश्चापि पलायतेऽसौ ।
प्लवङ्गमः क्षेत्रविनाशकारी किमेष हिन्दुर्न तथाऽपनेयः ? ॥३५॥
अस्त्यस्य मूढस्य वनेचरस्य पिता शहाजिर्हि वशंवदो नः ।
साम्राज्यकोणे क्वचिदस्मदीये यः किंकरो यापयति स्वमायुः ॥३६॥
विनष्टधीर्मत्त इव प्रकामम् असाम्प्रतं सम्प्रति वर्तते सः ।
कृतोपजापः स्वजनैर्निगूढं साम्राज्यमस्माकमिदं क्षिणोति ॥३७॥
चारैरिदं मे विनिवेदितं प्राग् अद्याफझुल्लेन विलेखितं च ।
आप्तादवाप्ताऽनुमितिप्रतीपा विश्वासपात्रं खलु किंवदन्ती ॥३८॥
दासोऽप्यसौ सैन्यसुहृत्समेतः सङ्ग्रामविद्याकुशलश्च शूरः ।
पुत्रेऽभियोगं सहसाऽवगत्य युद्धं प्रकुर्यात् कुपितः शहाजिः ॥३९॥
तस्मान्न यावद् विनिगृह्यतेऽसौ कर्णाटके शत्रुपिता कथंचित् ।
तावन्न युद्धं विपिनेचरेण फलप्रदं स्यादिति तर्कयामि ॥४०॥
राजाधिराजस्य जगद्‌गुरोस्तत् सुदूरदर्शित्वमवेक्ष्य सूक्ष्मम् ।
आश्चर्यविस्फारितलोचनास्ते ह्यन्योन्यमेक्षन्त मनाक् सलज्जाः ॥४१॥
विजापुरेन्द्रश्वशुरः प्रसिद्धः कूटप्रयोगे च रणे प्रवीणः ।
उल्लालयन् कूर्चमुवाच वाचम् अमात्यवर्यः किल मुस्तफाख्यः ॥४२॥
" द्विधा कृतं संकटमेकमेव राजन् यदुक्तं भवताऽधुना नः ।
तदर्धभारं व्यपनेतुमद्य कर्णाटकं गन्तुमहं समीहे ॥४३॥
विश्वासमापाद्य कयापि युक्त्या शहाजिमेनं सहसा विमोह्य ।
निगृह्य कालायसशृङ्खलाभिः मतङ्गवत् त्वत्पुर आनयामि ॥४४॥
वाग्जालके कोमलशब्दतन्तौ संव्यातेतेऽनेन मया यथावत् ।
न केवलं मीननिभाः पुमांसो बद्धा अपि ग्राहभयंकरास्ते ॥४५॥
भुजङ्गमस्तीव्रविषन्धरोऽपि मञ्जुस्वरेणैव वशं प्रयाति ।
तदेष हिन्दुर्मधुभाषणेन कथं वशे स्थापयितुं न शक्यः ॥४६॥

निगृह्यते यावदमुष्य जन्तोः पिताऽतितुच्छस्य मया प्रयुक्त्या ।
तावत्ससैन्योऽभियुनक्तु शत्रुं फतेहखानोऽयमधृष्यवीर्यः ॥४७॥

निश्चप्रचं मृत्युमुखप्रपन्नं दृष्ट्वैव भीरुः पितरं स वन्यः ।
रणं हि मुक्त्वा शरणं तवैव प्रपद्यतां साञ्जलिबन्धमद्धा ॥४८॥

ततोऽपि चेन्मन्दमतिः स बालः शिरस्तवाग्रे नमयेन्न गर्वात् ।
फतेहखानस्तमुष्य कृत्त्वा करोतु राजेन्द्र ! नवोपहारम् ॥४९॥

वयं द्विधा कृच्छ्रमभिप्रपन्नाः यथा तथाऽस्मद्रिपुरप्युपेतु ।
जिगीषवो नीतिविदः सदैव शठेषु शाठ्यं प्रतियोजयन्ति ॥५०॥

इति नरपतिवल्लभस्य तस्य कुटिलमतेरवगत्य कूटमन्त्रम् ।
प्रमुदितमतयोऽनुमेनिरेऽन्यैः शिवविजयप्रतिशोधमीहमानाः ॥५१॥

धन-जन- हय-हस्तिपत्तियुक्तो
लघुयुक्त्या ग्रसितुं शहाजिमुत्कः ।
अनुमतिमधिगम्य येदिलस्य
मधुभाषी स च मुस्तफः प्रतस्थे ॥५२॥

॥ इति श्रीशिवराज्योदये महाकाव्ये
"शत्रुव्यथा" नाम द्वादशः सर्गः समाप्तः ॥

॥ १८८२ तमे शालिवाहनशके चैत्रशुक्लप्रतिपदि
नववर्षारम्भे समाप्तोऽयं सर्गः ॥
( ९-४-५९ ख्रिस्ताब्दे )

## श्रीशिवराज्योदये महाकाव्ये
## 'आपत्तिद्वयाघातो' नाम त्रयोदशः सर्गः ।

स दुर्गषट्काधिपतिः शिवाजिः विजेतुकामोऽन्यमरातिदुर्गम् ।
सुखोपविष्टः सह मातृमित्रैः भृशत्वरं चारमपश्यदेकम् ॥१॥
त्रपातपारोपितकालिमानं श्रवाम्बुपूर्णाङ्गजरोमकूपम् ।
प्रवृद्धनिश्वासनतोन्नतोरःस्थलं तमालोक्य स शङ्कितोऽभूत् ॥२॥
पञ्चाङ्गसंस्पृष्टधरं विनम्रः स वक्तुकामोऽप्यवरुद्धकण्ठः ।
गृहीतजिह्वस्त्रपयेव चारः स्खलत्पदां प्रैरयदात्मवाचम् ॥३॥
"सौभाग्यवन्तः खलु तेऽम्ब चाराः ये पूर्णपात्रस्य भवन्ति पात्रम् ।
निवेदयन्तो हितकिंवदन्तीं प्रियां प्रियेभ्यः प्रथमं प्रियाणाम् ॥४॥
परं मया प्राक्तनजन्मनीषत्पुण्येन पापं महदाहितं स्यात् ।
यत्पुण्यभाजां भवतां पुरस्तात् नियोजितो वक्तुमवाच्यवाचम् ॥५॥
सुभद्रशीलस्य किमप्यभद्रं स्वस्वामिनो वः प्रतिवक्तुमद्धा ।
वाचालयत्यद्य हि पामरं मां विधिः कुधीर्हर्तुमिवात्मपापम् ॥६॥
सम्मोहनास्त्रं प्रियवाङ्मयं तत् प्रयोज्य युक्त्या मधुभाषणेन ।
सिंहः शशेनेव हि मुस्तफेन प्रवञ्चितो हन्त शहाजिराजः ॥७॥
गुरुस्तवाऽसौ गुरुशृङ्खलाभिः कुमार ! कालायसदुर्धराभिः ।
रात्रौ तुरीयप्रहरे प्रसुप्तः सशस्त्रपातं रिपुणा निबद्धः ॥८॥
कुलेन धर्मेण च हास्मदीयैः नीचातिनीचैर्बत बाजिमुख्यैः ।
सहर्षहासं परितः समेत्य निर्भत्सितोऽसौ कटुशब्दटङ्कैः ॥९॥
संकुण्ठितो नैगडलोहबन्धैः प्रताडितश्चार्मणदुष्प्रतोदैः ।
कारालयं प्रत्यपि हन्त नीतो ह्यनाथवत् सोऽखिलहिन्दुनाथः ॥१०॥
कुमार ! मातर्हतजीवितस्य क्षन्तव्य एषोऽद्य ममापराधः ।
वचो हि यद् दुर्वचमेवमुक्त्वा जीवामि दुःखानलदग्धचेताः ॥११॥
तवाम्ब भर्ता शिव जन्मदाता ममान्नदाता जनदुःखहन्ता ।
विजापुरे राजपथे स राजा प्रदर्शितो बद्धमृगेन्द्रतुल्यः ॥१२॥
वार्तामिमामार्ततया निवेद्य चारः स चारातिकृतिं विनिन्दन् ।
अमर्षशोकानलदग्धचेता विमुक्तकण्ठं सहसा रुरोद ॥१३॥
आकस्मिकीं घोरतमां प्रवृत्तिं स्वभर्तृजीवापहरां निशम्य ।
धीरा प्रकृत्याऽपि जिजा तदानीं पाषाणमूर्तिप्रतिमा बभूव ॥१४॥
शुश्राव किञ्चिन्न जगाद किञ्चित् ददर्श किञ्चिन्न विवेद किञ्चित् ।
निरुद्धकल्पश्वसिता कथञ्चित् न सा तदानीं निपपात भूमौ ॥१५॥

श्रुण्वन्नुदन्तं पविपातकल्पं शिवाजिराकस्मिकमार्तचेताः ।
क्षणाद् विसस्मार महान्तमन्तः समुच्छलन्तं विजयप्रमोदम् ॥१६॥
वृत्तान्तमाकर्णयितुं समुत्कैः अन्यैस्तु चारं परितः परीतैः ।
त्यक्षरं कर्णपथेऽनुभूतः प्रतप्तलोहद्रवबिन्दुपातः ॥१७॥
परस्परं किञ्चिदभाषमाणैः निःस्पन्दनालोचनपक्ष्मभिश्च ।
निश्चेतनान्तःकरणैः समित् सा पाषाणमृन्मूर्तिमयीव जाता ॥१८॥
चिराय नाभाषत कोऽपि कञ्चिद् अधोमुखं नोदनयच्च कश्चित् ।
व्यदारयत् कोऽपि भुवं पदेन न्यपीडयद् वाऽथ शिरः करेण ॥१९॥
प्रवेगधावत्तुरगांघ्रिपात—समुच्छलद्भूरिरजःसमुत्थः ।
दूरात् खुराघातकठोरशब्दः चकर्ष तेषां श्रवणेन्द्रियाणि ॥२०॥
सद्यः समाकर्णितदुष्प्रवृत्तिव्यामूढसम्भ्रान्तविषण्णचित्ताः ।
शशङ्किरे संकटमेव सर्वे विपद्गतानां विपदेव चित्ते ॥२१॥
रजःसमूहादुदयन्निवैकश्चारः स्वकीयोऽस्फुटमीक्षितस्तैः ।
प्रताडयन् मन्दगतिं समर्थ्यं तुरङ्गमं स्वं गरुडप्रवेगम् ॥२२॥
निमेषमात्रात् स समीपमेत्य श्रमाम्बुसंक्लिन्नसचैलकायः ।
यथाक्रमं सम्प्रणिपत्य सर्वान् उवाच निःश्वासविकीर्णवर्णः ॥२३॥
मातर्महाराज ! नवस्वराज्यसत्रं हि नो ध्वंसयितुं प्रवृत्ता ।
वरूथिनी काऽपि विजापुरीया प्रचण्डरूपा खलु पूतनेव ॥२४॥
तस्याः प्रणेता चतुरङ्गभाजः फतेहखानः स च कंसतुल्यः ।
हिन्दुस्वराज्यार्भकमात्मशक्त्या निहन्तुमाकाङ्क्षति जातमात्रम् ॥२५॥
दृष्ट्वैव सेनां सहसा रिपूणामहं पुनर्मारुतितुल्यवेगः ।
उल्लङ्घ्य दुर्लंघ्यपथं सुदीर्घमभुक्तपीतोऽत्रसमागतोऽस्मि ॥२६॥
दन्तावलास्ते तुरगायमाणाः तुरङ्गमा वा गरुडायमानाः ।
पदातयः कोलकुलायमाना विध्वंसितुं राज्यमिदं त्वरन्ते ॥२७॥
सस्यानि सर्वाणि कृषीवलेभ्यो गव्यानि गोपालकुलाङ्गनाभ्यः ।
हठादपाहृत्य विनिर्ग्रसन्ती चमूरसौ राज्यमिदं ग्रसेन्नः ॥२८॥
क्षमस्व मे धीर कुमार भीरोः इदं वचोऽशङ्कितपापशङ्कि ।
मेरुस्थिरान्तःकरणस्य तेऽग्रे भयस्य शङ्कैव वृथेति जाने ॥२९॥
पूर्वां विपत्तिं परिबृंहयन्तीम् अन्यामिमां मूर्धनि निष्पतन्तीम् ।
श्रुत्वा शिवाजिः स निसर्गधीरः सावेशमुत्थाय बभाण सर्वान् ॥३०॥
उत्तिष्ठतोऽत्तिष्ठत हे सुवीराः जयध्वनिं गर्जत गर्जतोच्चैः ।
स्मृत्वा भवानीं जगदादिशक्तिम् अह्नाय विध्वंसत शत्रुसेनाम् ॥३१॥
गोब्राह्मणत्राणकृतेऽस्मदीयः स्वातन्त्र्यसंस्थापनयत्न एषः ।
विरोधिनस्तत्र भवन्ति ये ये संहारमर्हन्ति सदैव ते ते ॥३२॥

विश्वेश्वरानुग्रहपात्रभूता वयं हि सर्वेऽप्यमृतस्य पुत्राः ।
अस्मत्सुसंकल्पबलेन विघ्नाः समुद्भवन्तो विलयं प्रयान्ति ॥३३॥
युष्मत्कृपाणाग्रविदीर्णसैन्यः पराभवं प्राप्य विपत्युदर्कम् ।
फतेहखानो निजनामधेयवैयर्थ्यमद्यैव विदांकरोतु ॥३४॥
जयैषिणीयं पृतनाऽप्यरीणां ययाभ्युपेति त्वरयाऽऽक्रमार्थम् ।
तयैव यौष्माकपराक्रमेण पराजयं विन्दतु सप्रणाशम् ॥३५॥
उपत्यका काचिदधित्यका च सह्यस्य पाषाणमयी कठोरा ।
प्रस्कन्दितास्मद्रिपुसैन्यमांसवसाभिराप्नोत्वधुना मृदुत्वम् ॥३६॥
म्लेच्छासुरासृक्परिरज्यमाने प्रोत्तुङ्गशृङ्गेऽस्य गिरेर्भवानी ।
खड्गाभिघातस्फुटदुच्चतालाननून्मदं ताण्डवितं करोतु ॥३७॥
कृत्तारिकण्ठोच्छलितास्रकूलंकषाप्रवाहातिकषायितास्ते ।
सह्यप्रपाताः सकला भवन्तु गुणेन पुण्याः प्रतिशोणभद्राः ॥३८॥
म्लेच्छाधिपोऽसौ च विजापुरीयः श्रुत्वा स्वसेनाहतिकिंवदन्तीम् ।
जानातु सह्याद्रिवनेचरेषु जागर्ति सा शाश्वतहिन्दुशक्तिः ॥३९॥
जानन्तु सर्वे यवनाधिराजा युष्माकमूर्जस्वलविक्रमेण ।
अतःपरं भारतपुण्यभूमौ स्वातन्त्र्यलक्ष्मीर्विहरिष्यतीति ॥४०॥
प्रोत्साहिनीं तां शिवराजवाणीम् आकर्णयन्तो विनताः सखायः ।
विषादकार्पण्यभयापहारि नूनं पपुर्वीररसायनं ते ॥४१॥
भयेन भीतीः क्वचन प्रलीना तथा विषादेन विषण्णता च ।
हृत्स्थण्डिले स्फूर्तियुतः स तेषां वीरः रसो मूर्त इवोन्ननर्त ॥४२॥
उत्सादनार्थं रिपुसैनिकानां सर्वेऽप्यहंपूर्विकया सुसिद्धाः ।
संग्रामधुर्यत्वमभीहमानाः जगर्जुरुच्चैर्विजयोग्रघोषम् ॥४३॥
विज्ञाय तं राजगडं रणज्ञः स्वावासदुर्गं समरात्यनर्हम् ।
शिवाजिराजिप्रभुतामवाप्तुं पुरन्दरं गन्तुमना बभूव ॥४४॥
पुरन्दरास्याधिपतिः शहाजेः सखा महादाजिरिति प्रसिद्धः ।
विपद्गतं मित्रसुतं शिवाजिं प्रेम्णाऽग्रहीदात्महृदीव दुर्गे ॥४५॥
हेमाद्रिदुर्लङ्घ्यपुरन्दराद्रौ पुरन्दरौजाः स युवा शिवाजिः ।
म्लेच्छासुरैर्योद्धुमना उवास मरुद्गणाभैः प्रियमित्रवर्यैः ॥४६॥
दुर्गः सुभानोत्तरमङ्गलाख्यः बालाजिनाऽरातिवशंवदेन ।
वशीकृतश्चेति विदन् स वीरः विगृह्य जेतुं पुनरैच्छदेनम् ॥४७॥
प्रक्षुब्धशार्दूलगणैरजय्यः वीराग्रणीर्वीरवरानुयातः ।
दुर्गं द्रुतं जेतुममुं प्रयुक्तः सुहृत्तमः कावजिनामधेयः ॥४८॥
कृत्वा मुहूर्तं रणरङ्गकेलिं सन्तुष्टये श्रीरणचण्डिकायाः ।
सर्वासु दिक्षु प्रसभं विकीर्य रणोचितं मौलिबलिं प्रभूतम् ॥४९॥

नवस्वराज्यस्य तमाद्यशत्रुं स्वकीयमप्युद्धतशत्रुवश्यम् ।
बालाजिमाहत्य रणे ससैन्यं दुर्गो जितस्तेन सवित्तकोशम् ॥५०॥
फतेहखानप्रमुखैः प्रवीरैः प्रोत्साहिताऽन्या ध्वजिनी रिपूणाम् ।
गजोष्ट्रतुङ्गा निनदच्छतघ्नी पुरन्दरं प्रत्यभियोक्तुमेता ॥५१॥
वनेचराणां दलमस्त्रहीनं तन्मुष्टिमेयं रभसा प्रहृत्य ।
बद्ध्वाऽसहायं पितृवच्छिवाजिं विजापुरं यामि जयेन सार्धम् ॥५२॥
सम्राडसौ राजसभागतं मां सम्मानयिष्यत्युचितैर्वचोभिः ।
अलङ्करिष्यत्यतिदीप्तहारैः स्वयसमाश्लिष्यति सप्रमोदम् ॥५३॥
जयार्थकं तन्मम नामधेयं लक्षाननेभ्यः समुदीर्यमाणम् ।
प्रवेक्ष्यति श्रोत्रपथं मदीयं पुनः पुनर्द्राग्जयशब्दपूर्वम् ॥५४॥
संकल्पयन्नन्तरिति प्रकामं फतेहखानः सहसाऽश्रुणोत् सः ।
जयध्वनिं कर्णविदारणोग्रं स्वावासपार्श्वे शिवसैनिकाम् ॥५५॥
अकाण्डमारब्धमदृष्टपूर्वं संहारकाण्डं परितोऽवलोक्य ।
भयाकुला म्लेच्छवरूथिनी सा गाढभ्रमावर्त इवाममज्ज ॥५६॥
आकाशतो वा गिरिभूमिगर्भात् सरिज्जलाद् वा विपिनान्तरङ्गात् ।
चमूरसौ दुर्धरशस्त्रपाता प्रादुर्बभूवेत्यनुमेनिरे ते ॥५७॥
यथाऽऽपतन् सत्वरमभ्यमित्रं तथैव संहारमयं च सत्रम् ।
समाप्य शैवा रणदीक्षितास्ते शिवं प्रपन्ना विजयेन सार्धम् ॥५८॥
पुरः स्थितं मृत्युमिवापहर्तुं पलायमानः स फतेहखानः ।
अनुद्रुतः सिंहपराक्रमेण वृद्धेन पासल्कर-बाजिना च ॥५९॥

शुभ्रं यशः प्रथमसंगरसत्रजन्यं
हा धिक् कलङ्कयितुमीषदिवाकलङ्कम् ।
क्रूरेण तेन विधिना सहसा रणान्ते
निःपातितो बत कृतान्तमुखे स बाजि ॥६०॥

प्रियसखमतिवीरं निर्गतं वीरयोग्यां
गतिमिति हि विदित्वा शोकमग्नः शिवाजिः ।
विजयमपि न मेने हर्षहेतुं कथंचित्
व्यथयति खलु सौख्यं स्तोकशोकाभिभूतम् ॥६१॥

**॥ इति श्रीशिवराज्योदये महाकाव्ये**
**"आपत्तिद्वयाघातो" नाम त्रयोदशः सर्गः ॥**

## श्रीशिवराज्योदये महाकाव्ये
## 'पितृमोचनम्' नाम चतुर्दशः सर्गः ।

अथ जिजा स्वसुतानुगविक्रमं रिपुनिषूदनमात्मजयावहम् ।
समधिगम्य तुतोष न सर्वथा पतिविपत्तिसमाकुलमानसा ।।१।।
प्रतिनिमेषमहर्निशमात्मनि प्रियपति-प्रतिमानमचिन्तयत् ।
किमपि नैक्षत वस्तु निजाग्रतः सततमन्तरुपाहितलोचना ।।२।।
वपुरपास्तसमस्तविभूषणं हृदयमस्तमितान्यविचिन्तनम् ।
बत तदीयमतिप्रियजीवितं क्षणश आहृतसारमिवाभवत् ।।३।।
पतिपदस्थितदुर्धरशृंखला-खणखणायितमात्रपरायणम् ।
श्रवणमन्यरवश्रवणाक्षमं प्रियसुतस्य वचोऽपि न चाग्रहीत् ।।४।।
वदनमश्रुजलाविललोचनं परुषरूक्षकचाचितमस्तकम् ।
करतले विनिधाय दिवानिशं रहसि सा कुलदैवतमार्चयत् ।।५।।
विजयिनोऽपि हि ते शिवसैनिका अगणयन्न जयं हृदयंगमम् ।
स्वहृदयेऽनुबभूवरहर्निशं प्रियसुहृज्जननीहृदयव्यथाम् ।।६।।
अथ यतिः परमार्थपरायणो भुवि समर्थ इति प्रथिताभिधः ।
प्रविचरन् जगतो हितकाम्यया शिवमियाय तदैव यदृच्छया ।।७।।
चिरतपश्चरणेन परोरजा अपि विभूतिरजः कणभूषितः ।
त्रिगुणबन्धनमुक्तमना अपि शिवगुणैकवशीकृतमानसः ।।८।।
तदुदितं रघुवीरजयध्वनिं नवपयोधरगर्जितमेदुरम् ।
श्रुतवतो हृदयं शिवभूपतेः मुदितमाकुलचातकपोतवत् ।।९।।
गुरुविपत्तिमिमां सहसागतां समधिगम्य स नीतिविशारदः ।
स्वपितृमोचनयुक्तिविचिन्तनाकुलमतिं शिवमेवमभाषत ।।१०।।
शिव सुधीर ! सुधीरसि सर्वथा दृढविवेकपरश्च परन्त्वियम् ।
गुरुविपत्तिरतिस्थितधीमतामपि धियं खलु चालयितुं क्षमा ।।११।।
जननमृत्युभयाच्चिरबन्धनादपि कथञ्चन मुक्तिरवाप्यते ।
यवनशासनशृंखलतः पुनर्न सहसा खलु कोऽपि विमुच्यते ।।१२।।
उदयनः किल बन्धनकोष्ठतः कपटयुक्तिबलेन बहिर्ययौ ।
इह तथा न तु काचन दृश्यते तव गुरोः परिमोचनशक्यता ।।१३।।
कुटिलनीतिरता यवनाधिपा न गणयन्ति ऋतानृतमार्जवम्
श्रुणु वदामि नयं स्मर शाश्वतं कपटमेव हि कापटिकैर्वरम् ।।१४।।

स पृथिवी–परराजपदाभिधो नरपतिः शरणागतवत्सलः ।
अगणयन्नयमेनमनुत्तमं बत निजर्जुतयैव पराहतः ॥१५॥
समवगच्छसि सत्यवतीसुतः श्रुतिसमे स्वकृतावपि भारते ।
दृढमिदं प्रतिपादितवान् मतं जयत मायिनमुत्कटमायया ॥१६॥
स कुटिलान्वयजोऽखिलशास्त्रविद् नृपतिनीतिविदां परमो गुरुः ।
श्रुणु समर्थयते निजदर्शने मदुदितं खलु शाश्वतिकं नयम् ॥१७॥
अपि च विठ्ठलभक्तिरसाप्लुतः परमशान्तिपरः स मुनिर्महान् ।
स्फुटमिदं प्रतिपादयतेऽधुना यदधमैरधमत्वमिहोचितम् ॥१८॥
भगवता कपटेन हि घातितः स यवनः किल कालयुताभिधः ।
कथमिमे यवनाः कपटं विना वद नितान्तपराभवमाप्नुयुः ॥१९॥
अपि च सत्यधनोऽपि रघूत्तमः सकपटं निजघान हि वालिनम् ।
मनुजदेहधरः परमेश्वरश्चरति यत् खलु तन्मनुजश्चरेत् ॥२०॥
पुरुषतामपि तां पुरुषोत्तमः सकपटं विजहन्निजलीलया ।
हितसुखाय विपद्यसुरद्विषां यदुचितं तदसौ समदर्शयत् ॥२१॥
इति निपीय हिताः स गुरोर्गिरः विनयनम्रशिरा युवकः शिवः ।
निजविमर्शबलोदितमुत्तमं कमपि मन्त्रमुवाच सुनिश्चितम् ॥२२॥
सुफलितं खलु भाग्यमिदं मम यदुपयान्ति गृहं प्रति हि स्वयम् ।
मुनिवरा गुरुदेव भवादृशः सकलमानवपूज्यपदाम्बुजाः ॥२३॥
जगति धर्मपथं शुभमुन्नतेः उपदिशन्त्यपि सिद्धगिरा स्वया ।
पितृविपत्तिविचिन्तनभर्जितं तदपि फुल्लति चित्तमिदं तया ॥२४॥
जगति राजपदोत्सुकचेतसां यदुचितं हि विपत्तिषु मादृशाम् ।
तदुदितं भवता स्वयमद्य मे कुटिलनीतिमहत्त्वमतिस्फुटम् ॥२५॥
सदुपदेशमवाप्य मुखाद् गुरोः किमपि भक्तजनेन समर्प्यताम् ।
स्वभुजविक्रमनिर्जितमर्प्यते सकलराज्यमिदं गुरुदक्षिणा ॥२६॥
इति निगद्य वदान्यशिरोमणिर्निजशिरो मणिकुण्डलमण्डितम् ।
यवनराजपुरः स्थितमुच्चकैरनमयद् गुरुराजपदाम्बुजे ॥२७॥
रघुपतेरिव तस्य शिवस्य तां यति–मुनिष्वपि दुर्लभदर्शनाम् ।
विभव–निर्ममतामवलोकयन् परिजहर्ष स हर्षविमुक्तधीः ॥२८॥
समधिगम्य स सिद्धगिरो गुरोः वरविशेषगुणां विजयाशिषम् ।
सविनयं पुनरात्ममनोगतं शुचितमस्मितपूर्वमभाषत ॥२९॥
ननु भवद्वचनश्रवणावधौ कुटिलमार्गगवेषणसत्वरा ।
मम मतिर्नवसंस्फुरणाद् गुरो यददिशत् तदहं निगदामि वः ॥३०॥

प्र बलशत्रुविरोध उपस्थिते मितबलो बलवत्तरमाश्रयेत् ।
कुटिलनीतिरियं समयेऽधुना मम भविष्यति भूरियशस्करी ॥३१॥
सकलभूमिभुजामिह भारते ध्रुवमनन्यसमोऽखिलशक्तिभाक् ।
उपगतः स्मरणं मम देहलीपतिरसौ बत शाहजहाभिधः ॥३२॥
यदपि तस्य बलोद्धतपूर्वजैः निखिलमुत्तरभारतमार्जितम् ।
निजबलेन पुनर्विजिगीषते सकलमेव स दक्षिणभारतम् ॥३३॥
चिरमसूयति दक्षिणभारताधिपतये स विजापुरभूभुजे ।
ग्रसितुमेनमरातिमवेक्षते किमपि फल्गुनिमित्तमनारतम् ॥३४॥
अतिबिभेति ततोऽयमहर्निशं मदरिरेष विजापुरकिंप्रभुः ।
स किल राक्षसजातिधुरन्धरः कपिकुलाधिपतेरिव वालिनः ॥३५॥
यदि तदीयमहं क्षणमाश्रयं ननु लभेय मनागतिदुर्लभम् ।
मम पिता ध्रुवमेव विमुच्यते रिपुमदेन समं समयेऽधुना ॥३६॥
अनुनयेन विना न हि लभ्यते बलवतामबलैरनुकूलता ।
उदधिमुत्तरति प्रचलोर्मिनम् अनुनयन्निव नम्रशिरा नरः ॥३७॥
स्रवदमन्दमदान्धविलोचनः सुदृढवृक्षविपाटनकौतुकी ।
अनुनयेन वशीक्रियते नरैर्भृशमधृष्यतमोऽपि मतङ्गजः ॥३८॥
विधृतवैतसवृत्तिरतः स्वयं विनयपत्रममुष्य लिखाम्यहम् ।
यदवलोक्य जिगीषुरसौ नृपो मदनुकूलतयैव चरिष्यति ॥३९॥
इति निशम्य शिवस्य यवीयसो नयपरं सुदविष्ठदृशो वचः ।
गुरुरुवाच, कुरु स्वमतोचितं नव मतं नितरां नयसम्मतम् ॥४०॥
अन्येद्युरेव निरियाय शुभे मुहूर्ते
दिल्लीश्वरं प्रति शिवप्रहितोऽग्रदूतः ।
उष्ट्रं प्रवेगमपि नोदयमान उच्चैः ।
आदाय तद् विनयपत्रमुदर्कभाग्यम् ॥४१॥
सा जिजाऽथ पतिमुक्तयेऽनिशम् ईश्वरार्पितमनोमतिः सती ।
उज्झिताऽशनमतीव दुश्चरम् आचचार वटपूजनव्रतम् ॥४२॥
सम्प्राप्ते ननु शुचिमासि शुक्लपक्षे प्राचीनं वटतरुमेकमाश्रयन्ती ।
सावित्रीं प्रियपतिजीवितप्रदात्रीं सा रात्रिन्दिवमतिपूजयांचकार ॥४३॥
निराहारक्षीणा प्रततरुदिताक्लिन्ननयना
वचोहीना दीना मलिनवसना म्लानवदना ।
हठादेकीकृत्य क्षपिततनुशेषं निजबलं
जगौ सा सावित्रीस्तवनमतिमन्दं कथमपि ॥४४॥

# श्रीसावित्रीस्तोत्रम्

श्रीसावित्रि त्रिभुवनमहामङ्गले पुण्यशीले
पातिव्रत्यप्रथितचरितस्फीतकीर्त्यैकमूर्ते ।
भर्तुप्राणप्रहरणमदोन्मत्तकालप्रजेत्रि !
हे मातस्त्वच्चरणशरणां त्राहि मां दीनदीनाम् ॥४५॥

देवाः सर्वे हरिहरगणेशादयः शक्तिमन्तो
बाल्यादेव प्रतिदिवसमाराधितास्तीव्रभक्त्या ।
निस्सामर्थ्या इव जननि ते हन्त नोन्मोचयन्ते
मत्प्राणं तं भगवति चिरान्म्लेच्छकारालयस्थम् ॥४६॥

मत्सेवासम्मुदितहृदयैर्योगिभिर्वीतरागैः
सौभाग्यार्थं शतशतविधा आशिषो मे वितीर्णाः ।
आपत्काले विपरिणमिते सिद्धवाचोऽपि तेषां
मत्सौभाग्ये भगवति ! पुनर्निष्फलत्वं भजन्ते ॥४७॥

अम्ब ! स्त्रीणां त्वमसि परमं दैवतं पुण्यभाजाम् ।
एकं ध्येयं भुवनविदितं भर्तृसेवाव्रतानाम् ।
मर्त्ये लोके मरणजयिनी त्वत्कथाश्चर्यरम्या
मन्त्रप्राया सकलसुलभा काव्यविद्यैव नूनम् ॥४८॥

भर्तृप्राणान् यमकरगतांश्चापि निर्वर्तयन्ती
राज्यभ्रष्टं श्वशुरमखिलं वैभवं प्रापयन्ती ।
साक्षान्मृत्योरपि हि हृदयं निर्दयं प्रीणयन्ती
शक्तिः सा ते महितमहिला-सद्यशोवैजयन्ती ॥४९॥

दिव्यं वह्नित्रयविनिहितं ज्योतिराम्नायशस्तं
त्रविद्यान्तः स्फुरितमखिलं ज्ञानमाध्यात्मिकं च ।
यन्माङ्गल्यं त्रिभुवनगतं, पिण्डितं तत्समग्रं
सावित्रीति प्रथितयशसि त्र्यक्षरे नामधेये ॥५०॥

जीवोद्धर्त्री त्वमुपनिषदन्तर्गता ब्रह्मविद्या
विश्वोद्धर्त्री प्रकृतिविमला कापि भागीरथी त्वम् ।
संसारेऽस्मिन् कलुषतिमिरे दीपिका स्त्रीस्वरूपा
त्वं चिच्छक्तिः स्थिरचरगता वैष्णवी शाम्भवी वा ॥५१॥

शुष्कप्रायो जननि निखिलो जीवनौघो मदीयो
भव्याकाङ्क्षामयदृढतटा हन्त भग्नाः समस्ताः ।
आपत्कालो दहति तपवत् सैकताभं मदन्तः
कन्येयं ते सरिदिव हि भूकम्पविध्वस्तरूपा ॥५२॥

इति स्तुतिशतैरहर्निशमसौ समाराधिता
कृपालवमदर्शयत् सपदि तोषिता देवता ।
प्रदोषसमये स्फुरच्छशिनि पूर्णिमास्यां तिथौ
गिरं श्रुतवती जिजा स्वहृदयैकसंजीवनीम् ॥५३॥

मुक्तः पितेति चरसंश्रुतकिंवदन्तीं
पीयूषवृष्टिमिव सौख्यकरीं किरन्तम् ।
ग्रीष्मावसानपिशुनं नवनीरदाभं
सा चातकीव सुतमैक्षत जीवभूतम् ॥५४॥

साश्चर्य-सम्मद-विनिर्गलदश्रुधारां
विप्रोषितागतशुचिस्मितपूर्णवक्त्राम् ।
आलोकयन् स्वजननीं मुमुदे शिवाजिः
मोदेत को न खलु मातृमुदा सुपुत्रः ॥५५॥

इति श्रीशिवराज्योदये महाकाव्ये
"पितृमोचनम्" नाम चतुर्दशः सर्गः समाप्तः ॥
(समाप्तोऽयं सर्गः आषाढे सुदि ४ थ्यां तिथौ ।)

## श्रीशिवराज्योदये महाकाव्ये
## "यवनराजकौटिल्यम्" नाम पञ्चदशः सर्गः।

असह्यकारालयवासमुक्तः शहाजिरानन्दपयोधिमग्नः।
आकस्मिकं चात्मविमुक्तिहेतुं विज्ञातुमैच्छत् प्रियबन्धुवर्गात् ॥१॥
विजापुरस्थेषु शिवप्रयुक्तेष्वेकश्चरः कश्चन कामरूपः।
रहस्तमभ्येत्य समस्तमाह वृत्तं तदुन्मोचनहेतुभूतम् ॥२॥
राजन् भवद्भाग्यमवर्णनीयं किं वर्णयामो वयमल्पवाचः।
यस्यात्मजस्ते प्रविमुक्तदाता शिवः स्वयं दिव्यगुणैश्च नाम्ना ॥३॥
स गूढरन्ध्रो रिपुरन्ध्रदर्शी दिल्लीश्वरं तं रिपुमस्य राज्ञः।
सम्प्रेष्य पत्रं विनयप्रदर्शि वशीचकारेव भवद्विमुक्त्यै ॥४॥
मित्रत्वमासादयितुं तदीयं पत्रे च तस्मिन्नलिखत् सुतस्ते।
यत्किञ्चिदत्यन्तविनम्रभावं संश्रूयतां वाङ्मयकार्मणं तत् ॥५॥
दिल्लीन्द्र भूमितलशासनसूत्रधार षाड्गुण्यभाक् त्रिविधशक्तिविशेषशालिन्
आदित्यमण्डलनिभे नृपमण्डलेऽत्र ह्येको भवान् रविरिवाखिलकेन्द्रभूतः ॥
न्यायैकलग्नमनसाऽद्भुतकीर्तिभाजा पित्रा नरेन्द्र भवतः प्रविलम्बितायाः।
मन्द्रध्वनिः स नृपमन्दिरघन्टिकायाः शश्वत्प्रतिध्वनति सर्वदिगन्तराले ॥
साम्नैव कांश्चिदथ कांश्चनभूरिदानैः भेदेन कांश्चिदितरान् समरप्रतापैः।
जेता पितामह उदारमनास्त्वदीयो मोहम्मदीयनृपवर्यललामभूतः ॥८॥
तैमूर-सत्कुलमहोदधिसम्भवेन्दो ज्योत्स्नेव कीर्तिरमला भवतश्चकास्ति।
काचित् कला रुचिरकान्तिमती यदीया धर्मध्वजं हरितवर्णमलंकरोति ॥
यद् बाबरप्रभृतिवीरवरैरतुल्यैः त्वत्पूर्वजैः स्थिरपदत्वमनीयतात्र।
तन्मत्पितुर्मम च सम्मतमेकमेव साम्राज्यशासनमुदग्रतरप्रभावम् ॥१०॥
तद्दक्षिणापथ इहाहमनन्यसाह्यः पूज्यः पिता च मम वर्धयितुं सयत्नः।
द्वेष्टा सुनी-मतवतां स शियाभिमानी मां बाधते मम गुरुं च विजापुरेशः ॥
आत्मानमेव जगदेकगुरुं वरिष्ठं मन्वान एष खलु दक्षिणसार्वभौमम्।
राजन् सुनी-मतवतां भवतामरातिः मां ध्वंसितुं प्रयतते भवदेकनिष्ठम् ॥
यन्निर्जितं भुजबलेन मयाऽत्र किञ्चित् दुर्लङ्घ्यपर्वतमये विपिनप्रदेशे।
हे सार्वभौम! नृपवर्य! तवाधिपत्ये संरक्षितुं तदखिलं सततं समीहे ॥१३॥
आहन्तुमेव सकलं बलमस्मदीयं राजाधिराज भवतः परमोपकारि।
पूज्यः पिता मम भवद्धितमात्रदक्षो बन्दीकृतः कपटतः स विजापुरीयैः ॥

यावन्न मे गुरुरसौ तव पक्षपाती कारालयाद् बहिरुपेति विजापुरीयात् ।
यौष्माकराज्यपरिवर्धनदत्तचित्तः तावन्न किञ्चिदपि कर्तुमहं समर्थः ।।
यच्छासने हि भवतां जनतौत्तराहा श्वःश्रेयसं भजति हिन्दुकुलप्रसूता ।
पृथ्वीपते! तदधिगच्छतु दाक्षिणात्या नित्यं भवद्बलसुरक्षितमद्विभागे ।।
त्वत्पुत्रसम्प्रहितमेवमुदारभावं राजन्नदो विनयपत्रमवाप्य तुष्टः ।
दिल्लीश्वरः स झगिति प्रतिपत्रमुग्रं सन्तर्जनार्थमहिनोच्च विजापुरेऽस्मिन् ।।
यस्मिन् क्षणेऽभ्युपगतं भयकम्पकारि तत्पत्रमेभिरिह शत्रुभिरस्मदीयैः ।
उद्घाटितं कटुरवं विरुदत् कवाटं कारालयस्य नृपते क्षण एव तस्मिन् ।।
शृण्वन्नितीमं स्वसुतप्रयुक्तं नीतिप्रयोगं निजमुक्तिहेतुम् ।
शहाजिराश्चर्यनिमग्नचित्तो विजापुरेन्द्रेण निमन्त्रितोऽभूत् ।।१९।।
कृताभिषेको धृतरम्यवासाः सुकुण्डलोऽसौ ग्रहरत्नहारः ।
विलोलमुक्तावलिलम्बिगुच्छस्फुरन्महोष्णीशयुतोत्तमाङ्गः ।।२०।।
श्रीखण्डरेखाङ्कितचन्द्रभालः कर्णान्तविश्रान्तसुनीलनेत्रः ।
सुगन्धिताम्बूलरसाक्तदन्तच्छदः प्रसन्नस्मितचारुवक्त्रः ।।२१।।
पुत्राभिमानोन्नमितोरुवक्षा आन्दोलिताजानुबलिष्ठबाहुः ।
स्वच्छन्दकण्ठीरवधीरगामी नृपालहर्म्यं प्रययौ शहाजिः ।।२२।।
तद्दर्शनात्युत्सुकलोलनेत्रा आबालवृद्धा वनिताः पुमांसः ।
सन्तोषयामासुरुदीर्णलाजैः पथा व्रजन्तं तमतिप्रसन्नम् ।।२३।।
तन्मुक्तिसम्मोदितमानसानां सुहृद्वराणां प्रणयप्रणामान् ।
प्रतिप्रणामैः प्रियभद्रवाक्यैः गृह्णन् नृपद्वारमसौ प्रपेदे ।।२४।।
द्वारि प्रविष्टं तमवेक्ष्य दूराद् म्लेच्छाधिपः कृत्रिमसम्मदोऽसौ ।
प्रदर्शयामास समीपमेत्य स्वयंकृताश्लेषमहाप्रसादम् ।।२५।।
स्नेहातिरेकादिव तस्य कण्ठे भुजं निवेश्य द्विपहस्तपुष्टम् ।
सिंहासनं प्रत्यनयत् स्वकीयं विजापुरेशः सहसा शहाजिम् ।।२६।।
यथोचितस्थानमुपेयिवांसं राजा समाकृष्य तमादरेण ।
हठादिवार्धासनमात्मनीनम् अध्यासयामास निवारयन्तम् ।।२७।।
तद् गूढरोषारुणितेक्षणास्ते सर्वेऽफझुल्लप्रमुखा अपश्यन् ।
बहिर्हसन्तो हृदि विद्विषन्तो वृक्षा विषार्द्रा इव फुल्लगुच्छाः ।।२८।।
तथापि सम्मानपरैर्वचोभिः स्मितैस्तथा कृत्रिमहार्दगर्भैः ।
नृपालयस्था अधिकारिणस्ते सभाजयामासुरमुं शहाजिम् ।।२९।।
करं तदीयं च करे स्वकीयं गृह्णन् सुहास्यस्फुटदन्तकान्तिः ।
म्लेच्छाधिपोऽसौ स्मयमानमेनम् उवाच वाचं कृतकोपचारम् ।।३०।।

## शेषं कोपेन पूरयेत् ।

शारदा ७:३-४ अङ्के अन्यायनिरसनविषये जगत् तृणाय मन्यमानेन मया स्वाभिप्रायः प्रकटीकृतः संस्कृत-स्पर्धागत-पक्षपात-नियोजन-हीनतादि-विषये । मया तत्र निर्दिष्टान् आक्षेपान् युक्तिवचोभिः खण्डयितुम् अक्षमैः स्पर्धाचालकैः आमूलान्तं केवलं गालि-प्रदानं कारं कारं परिचायितं स्वीयं गालिसंयोजनकौशलम् । एतदर्थम् अग्रिमवर्षे 'अपशब्दचूडामणिः' इति बहुमानोपाधिसमर्पणेन स्वयं स्पर्धालुभिः संमाननीयाः ते इति प्रार्थयामहे ।

संस्कृत-स्पर्धा-विषये संस्कृतपत्रे शारदासदृशे पृष्टाः प्रश्नाः । उत्तरं तु तेषां ज्ञातुकामैः (गालिकोशजिज्ञासुभिः) द्रष्टव्या तदर्थं 'टि. म. कि.' पत्रिका 'महाराष्ट्र'- भाषायाम् अपि अशुद्धि-प्रचुरा (गालिकोशकार-संपर्कात्) । संस्कृतशारदा एतैः स्पर्धा-संयोजकैः स्वीयेन अपशब्दपाटव-प्रदर्शनेन नैव दूषिता इति कृत्वा अभिनन्द्यन्ते ते सर्वैः शारदोपासकैः ।

अन्यच्च शासकीयद्रव्यसाहाय्येन, सार्वजनीनद्रव्येण वा स्पर्धाः संयोज्य स्वीयं 'सर्वज्ञ' त्वं निर्दुष्टत्वं च हठात् राद्धान्तयितुकामानाम् एतेषां धवलचरितं ज्ञातुकामैः प्रष्टव्याः पुण्यपत्तनस्थाः पं. न. ना. भिडे (न्यू इंग्लिश स्कूल), पं. ना. ह. दीक्षित (मॉडर्न हायस्कूल), पं. श्री. ल. आठलेकर (रास्तापेठ प्रशाला) डॉ. स. वि. सहस्रबुद्धे (नू. म. वि. प्रशाला) प्रभृतयः सुरगवीसेवकाः । अवश्यम् एते तेषां पयोमुखान्तर्गतं विश्वरूपदर्शनं कारयितुं समर्थाः सन्ति । अनेन अनिष्टवादकलकलेन नैव इतःपरं दूष्यते 'शारदा' इति निर्णयं 'शारदा'काराणाम् आदृत्य विरम्यते एतद्विषयकवाग्व्यापारात् ।

— अधिज्यधन्वा

---

शारदा–(पुण्यपत्तनम् २.) ७:१२-१३ ★ रजि.क्र. एम्. एच्. ५५७
० लायसेन्स क्र. १३७ टु पोस्ट विदौट प्रीपेमेण्ट.

## शा र दा–गौ र व–ग्र न्थ मा ला

| पुष्पम् | लेखकः | मूल्यम् |
|---|---|---|
| १. श्रीराजेन्द्रप्रसादचरितम् | — पं. वासुदेवशास्त्री लाटकर | ३.०० |
| २. वात्सल्यरसायनम् | — प्रा. श्री. भा. वर्णेकर | १.०० |
| ★३. शिक्षैषा सात्त्विकी सताम् | — प्रा. रं. रा. देशपाण्डे | २.०० |
| ४. श्रीरामकृष्णपरमहंसीयम् | — प्रा. श्री. भा. वर्णेकर | १.२५ |
| ५. बालकानां जवाहरः | — पं. विघ्नहरि देव | ०.४० |
| ६. श्रीमान् विन्स्टनः चर्चिलः | — पं. औदुम्बरकर शास्त्री | ०.६४ |
| ७. अप्पाशास्त्री : साहित्यसमीक्षा | — प्रा. अशोक अकलूजकर | २.०० |
| ८. श्रीशिवराज्योदयमहाकाव्यम् | — प्रा. श्री. भा. वर्णेकर | ( क्रमशः ) |
| ९. ‘समानमस्तु वो मनः’ | — डॉ. ग. बा. पळसुले | ३.०० |
| १०. मराठी–संस्कृत-शब्दकोषः | — जोशी-परांजपे-गाडगीळ | (क्रमशः) |
| ११. आप्पाशास्त्री : जीवनकार्यम् | — पं. औदुम्बरकर वासुदेवशास्त्री | ★ |
| १२. हिन्दुसम्राट् स्वातन्त्र्यवीरः | — डॉ. ग. बा. पळसुले | २.०० |

★ अप्रकाशितम् !

**प त्र व्य व हा र स्था न म्**

**‘शारदा’– कार्यालयः, ४२५ सदाशिव, पुणें २.**

संपादकः मुद्रकः प्रकाशकः स्वामी – वसन्त अनन्त गाडगीळ

मुद्रणस्थलम्– यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् २.

प्रकाशनस्थलम्-१.- मः म. प्रा.द.वा.पोतदार, ३९८ शनवार, पुण्यपत्तनम् २

२.–श्री. ल.म. चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४

कार्यालयः— खजिनामहालभवनम्, ४२५ सदाशिव, पुण्यपत्तनम् २.